# कविकालिदासम्

## नाटकम्

# Kavi-Kālidāsam




Dr. B. K. Bhattacharya

M.A., P.R.S., D.Litt., I.A.S.



संस्कृत पुस्तक भाण्डार

Published by .
Shri Shyamapada Bhattacharya
Sanskrit Pustak Bhandar
38, Bidhan Sarani,
*Calcutta-6*

प्रथमं प्रकाशनम्
१८९० शकाब्दे

ग्रन्थांगसज्जा

—कुमारी-वैजयन्तीभट्टाचार्यकृता—

Price { Indian —Rs 8 00
Foreign—Sh 15-0

कलिकातायां ८१ सिमूलासरणौ
अरुणिमामुद्रणयन्त्रालये
देवेशदत्तेन
मुद्रितम्




—आत्मजायै वैजयन्त्यै—

मधुरं भाषते सा गायति ललितं
विलसति सकलचारुकलासु मंजुचारिणी कन्या या।
मधुरं भाति मे सूनाधरहसितं
किमिव हि मधुमयं न लतासु मंजरीरुचा धन्यायाः॥

"कवयः कालिदासाद्याः
कवयो वयमप्यमी ।
पर्वते परमाणौ च
पदार्थत्वं प्रतिष्ठितम् ॥"

—शार्ङ्गधरः




An apology is perhaps needed for presenting a life of Kālidāsa and that in Sanskrit. I must confess at once that this booklet makes no pretence of being a history or biography,—or even a historical drama, but a drama based on pure imagination in respect of events in the poet's life. As regards, however, the poems and plays attributed to Kālidāsa, the present work does attempt to give a correct picture in the light of the researches of modern scholars, both Indian and Western. Even if I were equipped for the task, I would not, however, seek to add another dissertation on the subject, since my objective is simply to give the readers and possible audience an idea of the great literary merits of Kālidāsa, in whom Sanskrit literature of the *belles-lettres* type reached its culmination.

Even six months ago I had never dreamt that some day I would have the temerity to produce a Sanskrit drama, or any other work in Sanskrit for the matter of that. But about four months back I witnessed the performance, on the Calcutta stage, of a Sanskrit drama on Kālidāsa—"the cuckoo among the clan of poets". It was an enjoyable play, full of witty dialogues as well as pretty songs exquisitely sung. None the less, I left the theatre hall with the disquieting thought that, instead of giving even an inkling of the poetic merits of ancient India's greatest poet and dramatist, the play was essentially the life of a simpleton, who, after displaying umpteen feats of superlative tomfoolery, received a boon from the goddess of learning to become a prince of savants. This is no doubt true to the time-worn tradition, but I heartily agree with those who declare that the various legends are apocryphal and that the man who

was thoroughly versed in grammar, rhetoric, prosody, astronomy, geography, scriptural literature as well as philosophy could not have become learned overnight due to a semi-miracle. Hence my romantic drama begins where, in a sense, that idyllic play ends and I have also spurned similar other myths clustering round our poet's name. Mine is a purely imaginative work, based no doubt on the probabilities in the sphere, but how far I have succeeded in fulfilling that objective, it is for the connoisseurs to judge.

As my main purpose is to convey an idea of Kālidāsa's literary virtues, I have drawn rather heavily on his writings; the selection of the passages has not, however, been decided solely on considerations of merit but with an eye to their dramatic interest in the structure of the plot. The time gaps between the production of the different works of Kālidāsa may be regarded as incredibly brief, but here also the dramatic "unities" rendered this imperative. It should also be noted that when a man of genius embarks on his creative venture, the time taken may well appear too short if judged according to normal standards. Youth, too, is usually the most pregnant period in this respect, but I lay claim to no conclusive thesis here. My work had to be in Sanskrit in order to introduce the original extracts in a natural manner.

I have used recognised metres in about half of my verses, but found it necessary to invent new ones wherever my thought could not be expressed through the former without Procrustean distortion After all, if Sanskrit is to continue to play its unique role in our cultural life, there are bound to be occasions for resorting to new metres and it would be no sacrilege to urge that our accredited prosodists have not said the last word on the subject. As Kālidāsa himself pointed out: "Not all that is old is therefore sacrosanct and nothing should be condemned merely for its novelty." Again, it is for the elite to judge if I have attained any measure of success in this field. If any histrionic group want to stage the play, they may safely omit most of the verses except those in Act II.

Since I am no Sanskrit pundit, there will doubtless be a plethora of errors—neological and otherwise—in my work, but I had neither the time nor the opportunity to submit the manuscript to any authority before sending it to the press. I would therefore beg of the scholars, who may do me the honour of going through these pages, to send me their views kindly so that the defects can be remedied in any possible future edition. All suggestions for correction and improvement will be gratefully acknowledged.

My official preoccupation as Chairman of all the three State Transport undertakings of West Bengal Government left me little time for doing proper justice to proof-reading. The authorities and workers of the Arunima Printing Works gave me unstinted assistance and I am largely responsible for the printer's devil.

My daughter Baijayanti had done all the decorations for the book, hardly a month before her B.A. (Hons.) final examination. I hope no unkind critic will pass a total verdict on the work such as—"what nice designs!" My young friend, Shri Syamapada Bhattacharya, has acted as the good Samaritan by undertaking the publication of the volume, and his zealous interest deserves special mention.

Several friends who had seen part of the manuscript encouraged me to publish the work. I received indifference and even active hostility from an unexpected quarter, but that only whetted my keenness to make the work see the light of day. I shall consider my labours amply rewarded if the learned think that I have achieved a modicum of success in portraying the poetic brilliance of the hero of my drama.

Transport House
45, Ganesh Avenue,
Calcutta-13

B. C. Chatterji




कविकालिदासनामधेयं नाटकमिदं मासत्रयेण रचितं सविनयं समर्प्यते मया काव्यकोविदकराम्भोजेषु। विषयेऽस्मिन् वाचनानि मे सूत्रधारमुखादेव ज्ञातव्यानि प्रस्तावनायाम्। परिहार्याद् वागाडम्बराद् बिभेमि नितराम्। अतः संक्षेपतो विषयान्तरमेव उद्दिश्य किंचिद् ब्रवीमि।

कालिदासस्य संस्कृतसाहित्यदिक्पालस्य लोकोत्तरप्रतिभाया वर्णनमेव मुख्याभिप्रायो मम। तस्य कृते कवीन्द्रग्रन्थनिचयात् पंचविंशतिः श्लोका उद्धृताः। प्रायेण श्रेष्ठाः स्तवका एव निर्वाचिता मया। परन्तु नाटकवस्तु-प्रसङ्गात् कतिपया नातिरुचिराः कविताश्च गृहीताः। प्रकर्षविषये च नूनमस्ति मतभेदस्य महानवकाशः। भिन्नरुचि र्हि लोक इति कालिदासेनैव सम्यग् उद्गाहृतम्। तत् क्षन्तव्यं मे निर्वाचनस्खलनं सुधीभिः।

मद्रचिताश्च सन्ति सपादशताधिकाः श्लोकाः। यत्र यत्र प्राचीनानि सावलीलानि वृत्तानि योग्यतम्यानि प्रतिभातानि तान्येव तत्र तत्र मयाव-लम्बितानि। अपि तु स्वचिन्ताविकारपरिहारार्थम् अन्यत्र नवानि छन्दांसि कतिचिद् आश्रितानि तेषां नामकरणं च विहितं मया मनाक् साध्वसेन तथाऽसाटोपम्। तत्प्रयोजनस्य सार्थकतायाश्च विचारो विदग्धजनैरेव करणीयः प्रश्रयापराङ्मुखैः। मम प्रयासो न कृत्स्नामोघ इति विवेचनं स्याच्चेद् भवेयं कृतार्थम्मन्यः।

नाटकस्यालंकरणं साधितं मद्दुहित्रा वैजयन्त्या। स्नातकपरीक्षार्थिन्यपि सा सयत्नमेव स्वनियोगमकरोत्। बन्धवश्च मह्यं भूयिष्ठम् उत्साहमयच्छन्। कस्माच्चित् स्थानाद् बाधा च प्राप्ता परन्तु सा प्रागोद्यत्मे दृढसंकल्पम् अविलम्बितेन ग्रन्थस्य प्रकाशनार्थम्। न जाने मम हठकारिता किमु प्रशंस्या किमुत निन्दनीया। सदसद्व्यक्तिहेतवः सन्त एव अत्र प्रमाणम्।

संस्कृतपुस्तकभाण्डारस्य परिचालको विद्योत्साही श्रीश्यामापदभट्टाचार्य-स्तरुणोऽपि दक्षतया रुचिशौचस्य च हेतोः प्रवीणतामेव गतः। ग्रन्थप्रकाशभारं सानन्दं गृहीत्वा तत्रभवान् प्रीतिपाशेन मां बद्धवान्। धन्यवादेन नेच्छामि तत्सौमनसं लघुतां नेतुम्। सत्साहित्यभाण्डारं प्रभूतामृद्धिं लभताम् उत्तरोत्तराम् इति नियतं कामये।

अरुणिमामुद्रायन्त्रालयस्य आधिकारिकाः कर्मचारिणश्च महतैव यत्नेन मुद्रणं कृतवन्तः। ग्रन्थोऽयं यदि विबुधेभ्यो रोचते तत् सर्वेषामायासः सफलतां यास्यति। अलमतिविस्तारेण।

सुगन्धवर्षी यदि काङ्क्ष्यते स्तवो
मुदं प्रयच्छेन्न तु नाट्यकोरकम्।
अथार्यमिश्राश्चपले सहिष्णवो
नवप्रसूनं स्मयते स्मारमकम्॥ इति—

कलिकातायाम्
आषाढस्य प्रथमदिवसे
१३७८ वंगाब्दस्य

विनीतस्य
ग्रन्थकारस्य




विद्यावत्तोषणार्थं करपुटकलितं कालिदासाख्यनाट्यं
गृह्यतेदं ममाद्यं रुचिरसिकजनैः प्रीतिसिक्तैरवश्यम् ।
तन्मालंचात् सुरम्याश्रितकुसुमचयैः सूत्रबद्धा स्रगेषा
गंगामात्रर्चनायां सलिलमपि यथा गांगमेवार्पणीयम् ।।




पुरुषाः

| | |
|---|---|
| कालिदासः | महाकविः |
| विक्रमादित्यः | उज्जयिनीराजः |
| धन्वन्तरिः<br>क्षपणकः<br>अमरसिंहः<br>शंकुः<br>वेतालभट्टः<br>घटकर्परः<br>वराहमिहिरः<br>वररुचिः | अष्ट रत्नानि |
| मन्दारकः | विदूषकः |
| वीरसेनः | सेनापतिः |
| कार्तिकः<br>गणेशः<br>फाल्गुनी<br>वासवः | नागरिकाः |

दौवारिकः, वन्दिनः, कंचुकी ।

रमण्यः

| | |
|---|---|
| मंजुभाषिणी | विक्रमदुहिता |
| कस्तुरिका | राजकन्यासखी |
| पुष्पिताग्रा | मालिनी |
| सानुमती | गिरिबाला |

## — मुद्राराक्षसप्रमादाः —

| पत्रांकः | अशुद्धरूपम् | शुद्धरूपम् |
|---|---|---|
| १ | त्वरिताश्रयो | त्वरिताश्रयः |
| २ | न्यायरश्मिणा | न्यायरश्मिना |
| ८ | याऽशङ्का | या शङ्का |
| १४ | आयताक्ष्याः | आयताक्ष्या |
| १५ | ॥२२॥ | ॥२१॥ |
| | दृश्यति | दर्शयति |
| २० | महाराजेण | महाराजेन |
| | कारितम | कारितम् |
| ५० | मेघदृतमाह्वये | मेघदूतमाह्वये |
| ५७ | प्रदर्श्यसि | प्रदर्शयसि |
| ६२ | चन्द्रदीनं | चन्द्रहीनं |
| ७६ | ....मण्ढणं | ....मण्डनं |
| ८७ | काव्यवीजानि | काव्यबीजानि |
| १०८ | श्रतम् | श्रुतम् |




प्रस्तावना

भारतभारतीवरगरमज्ञो यो मनीषी ह्यत्र विकीर्त्यते
नाटककाव्यपुष्पकानने रौति नित्यं यश्च पिकोत्तमः ।
तं कविकालिदासमादितो ध्यायता मुखेन समर्प्यते
तच्चरिताश्रयो कथांजलिः कोविदैः प्रेम्णा च स गृह्यताम् ॥१॥

(नान्द्यन्ते) सूत्रधारः ।—वन्दे समागतं सुधीवृन्दम् । अलमतिभाषितेन । (नेपथ्याभिमुखम् अवलोक्य) भद्रे, नेपथ्यविधाने सम्पन्ने सति आगम्यताम् अत्र ।

(प्रविश्य) नटी ।—इयमहम् आगतांजसा । आदिशतु वरांवदाम् ।

सूत्रधारः ।—अवहिता भव । अद्य खलु विद्वज्जनसमीपं साहित्यमूर्त्युपाधिकेन वीरेन्द्रकुमारभट्टाचार्येण विरचितं कविकालिदासनामकम् अपूर्वं नाटकम् उपस्थाप्यते ।




नटी ।—क्षम्यताम् अयं प्रश्नः । कथम् अपूर्वमिति याच्यते ? श्रुतं मया यद् अन्यान्यपि कालिदासचरितानि केन केनचिद् रचितानि तथाभिनीतानि च भारतवर्षस्य नानास्थानेषु ।

सूत्रधारः ।—युक्तमुक्तं भवत्या । परन्तु तानि नाम महामूर्खस्य कालिदासस्य सरस्वतीवरेण कवित्वलाभं वर्णयन्ति न तु कविकालिदासस्य जीवनकाहिनीं प्रभातरलं ज्योति वा । तन्मनाक् प्रभेदो वर्तते ।

नटी ।—अहो मन्दभाग्यम् अस्माकं यत् महाकवेरितिहाससम्मतं जीवनचरितं नास्ति एकमपि ।

सूत्रधारः ।—अतो नवीनकविना स्वकपोलकल्पितं जीवनालेख्यम् अंकितम् । परन्तु तेन किंवदन्तीः परिहाय सम्भाव्यतैव समाश्रिता । तत् स उपहास्यता गच्छेदिति मे शंका ।

नटी ।—एष खलु प्रश्रयपात्रं स्यात् न तु कदापि उपहासास्पदम् ।

सूत्रधारः ।—अथ किम् । आर्ये, कथयामि ते भूतार्थम् ।

कल्पनैव क्षमा स्रष्टुं याथार्थ्यरिक्तनाटकम् ।
स्वैरिणीव तु सा श्रंश्या संयम्या न्यायरश्मिणा ॥३॥

तदेतत् कविकल्पितम् आख्यानं तथ्यमूढं न्यायग्राह्यं वेति विद्वद्भिरेव विचारणीयम् । भवतु, तावत् त्वया मनोहरं किमपि संगीतं रसिकसंसदे उपहार्यताम् ।

नटी ।—कं नु विषयम् अवलम्ब्य गास्यामि ?

सूत्रधारः ।—विक्रमपुरीं श्रीविशालां विशालामेव आश्रित्य गीयताम् ।




नटी ।—तथा करोमि । (गायति)—

विन्ध्यपादादवतीर्णा स्वच्छतोयोच्चलकीर्णा
नृत्यरभसेन याति नर्मदाख्या निर्झरिणी ।
उत्तराशास्थितदेशो मालवानां शिखिवंशः
स्कन्दपुरमेव तस्य राजधानी चोज्जयिनी ॥
हर्म्यमालाविनन्दिता रम्यकुंजैरनिन्दिता
नित्यसुखप्रदा यथा कामधेनुका नन्दिनी ।
तत्र सर्वा वरांगनाः पंचवक्त्राश्रितांगनाः
का क्रियते हि भीरुणा पुष्पधन्वना वन्दिनी ॥३॥

सूत्रधारः ।—अतीव मनोरमं संगीतमिदम् । अगायश्च त्वं विशुद्धतालल्याभ्याम् । परन्तु विशालायाः पौरांगनाः प्रति निक्षिप्ता अतनोः पंचशरा मोघीकृता इत्यत्र अस्ति श्रीगोऽपि संशयावकाशः ।

नटी ।—(सलज्जम्) यास्याम्यहं तावत् । अभिनयोपचाराणां सम्यगायोजनं पर्यवेक्षणीयम् । [ निष्क्रान्ता ]

सूत्रधारः ।—(विहस्य) रंगमंचेऽपि नटीमुख्याया व्रीडा नितराम् उपभोग्या ।

(नेपथ्यं पर्यवेक्ष्य)

मन्ये आगच्छत्यत्रैव मन्दं मन्दं जीर्णवस्त्र-परिहितः कश्चिद् ब्राह्मण-युवक इति ।—

लक्ष्यते विप्रयूनोऽहि मेधा नूनममानुषी ।
ललाटस्तस्य दीप्तश्च ज्वलदर्चिर्दिनेशवत् ॥४॥




परन्तु चिन्तामग्नोऽयं प्रतिभाति मे। तन्न भवामि तस्य विघ्नकारणम्। यावदहं सन्निहितं वेणुकुंजान्तरालम् आश्रयामि। (संसदं प्रति)—

नवीननाट्यं रचितं कविनाऽकुशलकर्मणा
कुशीलवैराकुशलै रद्याभिनीयते।
कथं नु शास्ये यदिदं कुरुते हृदयरंजनं
सुधीजनेभ्यो यदि वा दिष्ट्यापि रोचते ॥५॥

[ प्रस्थितः ]

—इति प्रस्तावना—

( ततः प्रविशति चीरपरिहितः कालिदासः )

कालिदासः।—भगवत्या सरस्वत्या स्वप्नादेशो मह्यं दत्तो-वत्स कालिदास, काव्यजातम् अनवद्यं रचयेति। काव्यं मे ध्यानं काव्यं मे पानं काव्यं च मम एकमेव शरणम्। परन्तु काव्यरचनस्य कथमवसरो लभ्यते मया? उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः। आजन्मदारिद्र्यं सुतरां पीडयति मामनिशम्। "अन्नचिन्ता चमत्कारा कातरे कविता कुत" इति युक्तमुक्तं केनापि महाजनेन। तैलतण्डुललवणसाभावाद् दुःसहा जाता खलु दैनन्दिनी जीवनयात्रा।
( ध्यात्वा ) तथापि मे जागरे सुप्तौ च चित्तनभसि स्फुरन्ति एकैकशः कवितारूपा तारका स्वामसनिराकरणाय।

कविमनस्सरोजानि कविता रागचर्चिताः।
कस्मै तान्यर्पयिष्यामि दैवताय नराय वा ॥६॥




( पादचारं करोति )

युक्ताधारे हि राजन्ते रत्नो रत्नं च चारुता।
"विनाश्रयं न तिष्ठन्ति कविता वनिता लता" ॥७॥

उज्जयिनीराजो विक्रमार्को गुणिजनानामाश्रय इति सर्वैरेव कथ्यते। शोभन्ते च तत्सभायां सप्त रत्नानि धन्वन्तरिप्रमुखानि। तस्य चेन् नृपभानोः कृपाकिरणो मदुपरि पतिष्यति तदहं निरुद्वेगं काव्यरचनं करिष्यामि रात्रिन्दिवम्। भवितव्यस्य द्वाराणि खलु अनिश्चितान्यपि चिरोन्मुक्तानि।

( नेपथ्याभिमुखं दृष्ट्वा )

आगच्छतीह कश्चन ब्राह्मणबटुः स्मितवदनः त्वरितगतिश्च। पृच्छाम्येव राजनिकेतनाभिमुखं पन्थानम् अस्मात्।

( ततः प्रविशति वररुचिनामा तरुणः )

भोः विप्रकिशोर, क्व गच्छसि हृष्टमानसो नर्तकपादक्षेपेण?

वररुचिः।—गच्छामि तावत् महाराजस्य विक्रमादित्यस्य रत्नपरिषदम्। स हि सर्वगुणाकरो गुणिनां च प्रतिपालकः। अतः पितृदेवेन आदिष्टोऽहम् —वररुचे, राजसमीपं गत्वा स्वकीयां काव्यशक्तिं प्रदर्श्य पारितोषिकलाभाय इति। चतुष्पाठीषु लब्धानि मया बहून्येव पारितोषिकाणि। परन्तु तानि वाङ्मयान्येव न कदाच वित्तरूपाणि। अतो यामि स्थूलत्वमुल्लिप्सुरद्य स्थानान्तरम्।

कालिदासः। ( सस्मितम् )—कालिदासोऽयं च रमते काव्यकानने।




कविमुपैति काव्यात्मा निर्जनारण्यवर्त्मनि ।
गन्तुकामावुभौ सद्यो रत्नमाहिनृपाश्रयम् ॥८॥

अतस्त्वया सह मिलनम् आह्लादयति मामतिशयेन ।

वररुचिः ।—भवानपि काव्यरसिकः ? परमानन्देन त्वत्संगं करिष्यामि ।

कालिदासः ।—काव्यकुशलतां दर्शयितुं गन्तास्मि तत्र । तत् स्वविद्यायाः किंचित् निदर्शनम् अभाजनाय मे प्रयच्छ ।

वररुचिः ।—सानन्दमेव । पृच्छतु भवांस्तावत् ।

कालिदासः ।—( सन्निकटस्थं जीर्णवृक्षमभि अंगुलिम् उत्थाप्य ) किमिदं वर्तते पथिपार्श्वे ?

वररुचिः ।—( सहास्यम् ) शुष्कं काष्ठं तिष्ठत्यग्रे ।

कालिदासः ।—साधु साधु वररुचे ! सत्यमुक्तं त्वया—
नीरस तरुरयं पुरतो भाति ।

वररुचिः ।—( विस्मितम् ) मधुरं वर्णनं महोदयस्य । मद्वाक्यं तु रसहीनं मन्ये ।

कालिदासः ।—मा विषादं गमः । रसशून्यस्य दारुखण्डस्य कार्कश्यं त्वयैव प्रभूतनैपुण्येन चित्रितं वर्णनोक्त्या ।

वररुचिः ।—न केवलम् आर्यस्य रचना वैदग्ध्यमण्डिता भवतो वाक्यशैली च मनोरंजिका ।

कालिदासः ।—वररुचे,—




प्रकृतिसमाना यदा संयाताः परस्परं
हृदयगवाक्षा स्तदा संजाता निरर्गलाः ।
विशति मुहूर्तं मनः प्रेमृगच्छन्दनानिलो
विरहजचिन्ताज्वरः स्निग्धशीतलीकृतः ॥९॥

वररुचिः ।—राजभवने भवतः काव्यं सर्वेभ्यो रोचिष्यत इत्यत्र मे सन्देह-लेशोऽपि नास्ति ।

कालिदासः ।—राजद्वारे त्वं मम सहायो भविष्यसि ।

वररुचिः ।—( सस्मितम् )—

परिहसनवचनमपि भणसि सखे
हृदयमतिपुलकमभि मम तनुते ।
किमपि हसति मधुशशिकलसितं
नमति ललितरमवितरकमन्दिराम् ॥१०॥

कालिदासः ।—वररुचेः शशिकलासमं रुचिरं स्मितं परमहर्षकरं मधुराणि च वचनानि नितरां रमणीयकानि । सखे,—

पुष्पाणि चित्तसरसः सुमनांसि यानि
तान्येव भान्ति नियतं सखिमोहनानि ।
एतानि शुद्धमनसः खलु ते वचांसि
रागेण मंजुलतया मम रोचनानि ॥११॥




वररुचिः।—धन्योऽहं संजातः। परस्पर-सहायकत्वेन द्वयोरप्यावयो र्विजयः सुकरो भवेत्। परन्तु राजसंसदि बहवः कोविदा वर्तन्ते येषां कवित्वं सुविदितम् ईर्षा च भीतिप्रदा। न जाने कथं नु तेषां कार्पण्यदोषं मोघीकर्तुं शक्नुवः।

कालिदासः।—शंका मास्म गमो वररुचे! नाहं तान् पराजेतुमिच्छामि। परन्तु कथंचिद् आवयो राजसद्मनि स्थानलाभो भवेच्चेत् सोऽपि मां प्रीणयिष्यति। अपि च—

भवन्ति ये ह्यपरपदासहिष्णवो
रिपूंश्च ते खलु जनयन्ति सर्वथा।
न जातु तैः कथमपि लभ्यते यशो
विनश्यते सततमजातशत्रुभिः ॥१२॥

नाहं परकीर्तिं निराकर्तुं कामये। अतः कुत्र मे भयं कस्माच्चिदपि? क्व चाऽऽशङ्का तव सरलचित्तस्य मात्सर्यहीनस्य च? तत् सत्वरमेव प्रयतस्व राजधानीगमनाय। पथिप्रष्ठो भूपतेऽस्मिन् देशे त्वमेव।

वररुचिः।—को दर्शयिष्यति सरणिं कालिदासं पथिकृतम्? भवतु—

जलदावृते तु सहसा तुहिनांशौ
पथिको वृणाति चकिता मृदुशंपाम्।
रसिकस्तथा च विगते कलहंसे
नियतीमिलेन रमतेऽपि कपोतैः ॥१३॥

कालिदासः।—(सस्मितम्) न खलु वररुचिः पौरपारावतः परन्तु मरालो मानसप्रियः।




वररुचिः ।—( सहास्यम् ) कपोत एव पथिको गहनाटव्यां तथा यथा मर्मज्ञ इव मानसस्यापारेषु मरालः । अतः परं निर्देहि राजधान्यभिमुखं, सखे ! गच्छावः शनैः शनैः काव्यालोचनमुखरौ । शिवाश्च भवेयुः पन्थानः पुण्यश्रेणिगस्तव संगेन……

कालिदासः ।—शिवकारुण्येन ।

सृष्टिस्थितिप्रवणो भवति जगति यो ध्वंसकोऽस्तथा
यः पुष्कलां विभूतिं दधदपि नियतं दिग्वस्त्रो राजते ।
बालेन्दुरम्यचूडो रजतगिरिनु गंगाम्भोभोजटो
गौरीपतिः कृपार्द्रः स सततमवतु त्राता नौ धूर्जटिः ॥१४॥

( निष्क्रान्तौ )

इति प्रथमोऽङ्कः

—: वररुचिमिलनं नाम :—






विक्रमः।—भोः आर्यमिश्राः सभापण्डिताः! देदीप्यन्ते ममात्र संसदि सत्-रत्नानि परमभास्वराणि। त्रीणि पुनः रत्नानि चेद् आगच्छेयु स्तद् दशदिशां प्रतीकानि पूर्णीभवेयुः। न जाने कदा मे वाञ्छापूर्णं भवेत्।

वराहमिहिरः।—महाराज, भवता नवरत्नानि प्राप्तव्यानीति प्रतिभाति मे। परन्तु विक्रमार्कः स्वयमेव पेशलतमं रत्नम्। नव ग्रहा इव नव रत्नानि भास्यन्ति सभाव्योममण्डले प्रदक्षिणं च करिष्यन्ति महादित्यं नित्यमेव।

विक्रमः।—साधु साधु आर्य वराहमिहिर! भवान् खलु भविष्यद्रष्टा वाक्-सिद्धश्च। नवरत्नलाभेनैव पूर्यते मे कामना। तद् उच्यतां कदा भवेन्मम वासनासिद्धिरिति।

वराहमिहिरः।—राजन्, समायातः कालः शुभंकरः फलप्रदश्च। अणुमात्रमपि न पश्यामि कारणम् उद्वेगस्य।

विद्यते हि तवेदानीं तुंगी दैत्यरिपोर्गुरुः।
तर्हि वाञ्छाचिरं भूप साफल्यमधियास्यति ॥१६॥

मंजुभाषिणी।—पितः, ज्योतिर्विप्रवरो भवितव्यं समीक्षते हस्तामलकवत्। भवत आकाङ्क्षापूर्तिः सर्वेभ्यो नो नितरां रोचिष्यते।

विक्रमः।—स्थाने मंजु भाषितं त्वया, धन्यसे मंजुभाषिणि! आर्य वराहमिहिर, दारिका मे हितं मनोहारि च वचनम् उच्चारयति। भवता प्रदत्तं नाम तस्याः सार्थकमेव।

[वराह]मिहिरः।—अथ किम्! तवात्मजा न केवलं प्रियं वदति, अपिच तस्याः भवात्मजुलभेन वैदग्ध्येन भृशं विस्मयान्विता उज्जयिनीनागरिकाः।




( समाविष्टः सकन्यश्च विक्रमः सिंहासनस्थः )

वन्दिनः ।—( गायन्ति )

जय कमलानदाम्बुजधारण कृतविद्याभातिचारण
सितकर कोविदगणतारण
हृतकीर्तिनूर्य !
जय जय विक्रमसूर्य !
जय सुर-मानवाश्रयदायक जितनीक्ष्णारातिसायक
नृपवर धीरललितनायक
धृतवंशधुर्य !
जय जय विक्रमसूर्य ॥१९॥

( निष्कान्ताः )




विक्रमः ।—भोः आर्यमिश्राः सभारञ्जनाः ! देदीप्यन्ते ममात्र संसदि सप्त-रत्नानि परमभास्वराणि । त्रीणि पुनः रत्नानि चेद् आगच्छेयु स्तद् दरादिरां प्रतीकानि पूर्णीभवेयुः । न जाने कदा मे वाञ्छापूरणं भवेत् ।

वराहमिहिरः ।—महाराज, भवता नवरत्नानि प्राप्स्यानीति प्रतिभाति मे । परन्तु विक्रमार्कः स्वयमेव पेराङ्गमं रत्नम् । नव ग्रहा इव नव रत्नानि भास्यन्ति सभाव्योममण्डले प्रदक्षिणं च करिष्यन्ति महादित्यं नित्यमेव ।

विक्रमः ।—साधु साधु आर्य वराहमिहिर ! भवान् खलु भविष्यद्रष्टा वाक्-सिद्धश्च । नवरत्नलाभेनैव पूर्यते मे कामना । तद् उच्यतां कदा भवेन्मम वासनासिद्धिरिति ।

वराहमिहिरः ।—राजन्, समायातः कालः शुभंकरः फलप्रदश्च । अणुमात्रमपि न पश्यामि कारणम् उद्वेगस्य ।

विद्यते हि तवेदानीं तुंगी दैत्यरिपोर्गुरुः ।
तर्हि वाञ्छाचिरं भूप साफल्यमधियास्यति ॥१६॥

मंजुभाषिणी ।—पितः, ज्योतिर्विप्रवरो भवितव्यं समीक्षते हस्तामलकवत् । भवत आकाङ्क्षापूर्तिः सर्वेभ्यो नो नितरां रोचिष्यते ।

विक्रमः ।—स्थाने मंजु भाषितं त्वया, वत्से मंजुभाषिणि ! आर्य वराहमिहिर, दारिका मे हितं मनोहारि च वचनम् उच्चारयति । भवता प्रदत्तं नाम तस्याः सार्थकमेव ।

वराहमिहिरः ।—अथ किम् ? तवात्मजा न केवलं प्रियं वदति, अपिच तस्याः अबालसुलभेन वैदग्ध्येन भृशं विस्मयान्विता उज्जयिनीनागरिकाः ।

ईदृशमपत्यं पितॄणां गौरवं बन्धूनाम् आनन्दं रिपूणां चासूयां जनयति। परन्तु मंजुभाषिण्याः सारल्यं शत्रूनपि विमोहयति। धन्या तस्या जननी स्वर्गता महादेवी यमुमती धरित्रीव यासीद् दयाशीला पुण्यश्लोका च।

यथा कुसुमिता लता रमरुचा
दृशो नयनयो र्विभाति सुखदा।
तथैव तनया तनोति विशदं
शुभं कुलयशः सुरूपगुणभाः ॥१७॥

मंजुभाषिणी।—अप्यत्रभवान् मामितो विताडयिष्यति?

वराहमिहिरः।—अहो व्रीडामयी राजदुहिता नात्मप्रशंसां श्रोतुं शक्नोति। भवतु, विषयान्तरं वक्ष्ये।—मा त्वम् अस्मात् स्थानात् पादमेकं गच्छेः।

विक्रमः।—( नेपथ्याभिमुखम् अवलोक्य ) पश्यत पश्यत! द्वौ ब्राह्मणयुवानौ अत्रागच्छतः। ( पर्यवेक्ष्य ) द्वावपि पर्यटनश्रमात् क्लान्तौ परिलक्ष्येते।

( ततः प्रविशति सवररुचिः कालिदासः )

कालिदासः।—विद्वद्भ्यो नमः।—राजचक्रवर्तिन्, अभिवादये भवन्तम् अयमहं कालिदासः। जयतु रिपुसूदनः कीर्तिलाञ्छनः।

वररुचिः।—अहं वररुचिनामा महाराजं वन्दे। नमामि च पण्डितमण्डलीम्।

विक्रमः।—भवन्तौ विप्रकुमारौ। अहमपि प्रणमामि उभौ कृताञ्जलिपुटेन।

कालिदासः।—युक्तमेतत् पौरवस्य लोकत्रयविदितस्य। यथा फलागमे नम्रा भवन्ति तरव स्तथा यशसा पेलवतां यान्ति नूनं हि नरपुंगवाः। नृपेन्द्र!




पयोदेभ्यः सलिलं याचते तृषातुरश्चातको
हिमांशोः कामयते कौमुदीं मिथश्चकोरी यथा।
यथा क्षीरं सुरभेरीहते क्रतुक्रमो याजक-
स्तथैवाहं च रवेरर्चिषं तमोहतः प्रार्थये ॥१८॥

विक्रमः।—अहो किमपि मधुरं वचनमिदम् अपूर्वा च चारुरूपमा कालिदासस्य चमत्कारिणेन। भोः सभ्य रत्नानि, दिष्ट्या खलु उपनीतमत्र एतन्महारत्नम् अद्य। आचार्य वराहमिहिर, अपि भवान् त्रिकालवेत्ता ?

कालिदासः।—राजकवे विक्रमार्क, नाहं भवत उपहासास्पदम्। मयि पश्यति भवान् अदृश्यं गुणजातम्। एष मे सखा वररुचिस्तरुणोऽपि मत्तो गरीयान्। आदिशतु तमेव तावत्। निमेषेण स रम्यतरं श्लोकम् उपहरिष्यति।

विक्रमः।—किमत्र चित्रम्। समभागाः समस्वभावश्च सखा मत इति वदन्ति पण्डयः। भोः वररुचे, ब्रूहि यावन् किंचित्। श्रावय सभाजनं काव्यं मनोज्ञम्।

वररुचिः।—भूदेव, आर्यः कालिदासो मयि भूरां स्निह्यति, अतो मम दोषा अपि गुणा इति मन्यन्ते तेन महोदयेन। अहम् अभाजनः काव्यरस-वंचितो यद्यपि क्वच कुत्रापि क्रियतायासेन श्लोकान् रचयितुं शक्नोमि।

स्नेहपात्रस्य दोषा गुणिना कदापि न दृश्यन्ते
रूढ्वाचोऽपि लब्ध्वा परमं गतस्तु स सन्तोषम्।
हन्त पारुष्यपारं क्रियते तथापि न लालित्यं
केवलं तेन नूनं महतो गुणास्तु विकीर्यन्ते ॥१९॥




मंजुभापिणी।—सुकवे वररुचे वचनं रुचिरं रुचिरश्च वरेति मन्ये।

( सर्वे सभाजनाः हसन्ति )

कालिदासः।—रचितं मया पार्वतीमुद्दिश्य अचिरं कश्चित् स्तवकः।

श्रूयतां स समासीनैः रसज्ञैः।

"प्रवातनीलोत्पलनिर्विशेषम्
अधीरविप्रेक्षितम् आयताक्ष्याः।
तया गृहीतं नु मृगांगनाभ्य-
स्ततो गृहीतं नु मृगांगनाभिः॥"क१॥*

मंजुभापिणी।—( व्रीडां नाटयित्वा स्वगतम् ) अप्येषा पूर्वरचिता कविता ?

विक्रमः।—अहो वर्षितं धर्मामृतं कर्णकुहरे! चित्रं च स्वर्णतूलिकयेव चित्तरंजनम् अंकितम्। उपमा तथा निरुपमैव ललितचतुरया उत्प्रेक्षया निपुणतया चालंकृता। विचित्रमेतद् यत् प्राकृतजनसेविता श्रीहीना वागेव प्रतिभासंस्पर्शेन मारकतीं द्युतिं धत्ते कांचनसंसर्गात् काचमणिरिव!

मनीषा प्रणयवद् राजते मर्त्यभूमौ
मरीचिप्रसरणैः स्वाश्रयं भासयन्ती।
तमिस्रेण किमिव स्थीयते स्वल्पकाले
परोद्भासलसदनं यापयन्तीह चित्तम्॥२०॥

भोः सप्त रत्नानि, कालिदासरचनं काव्यपिपासां परिवर्धयति मम। अद्याहं सर्वेभ्यः श्लोकान् श्रोतुकामो जातः। तावद् आर्य धन्वन्तरे, भवान् प्रथमं किंचित् श्रावयेत्।




धन्वन्तरिः ।—राजरसिक, कविराजः खल्वहम् आयुर्वेदज्ञो न तु राजकविः । न च कवित्वशक्तिमत्त्वादहं स्वपदे वृतः । त्रिदोषविषयकम् अतः किंचिद् वक्तुं शक्तः । परन्तु तत् श्रुत्वा सर्वेषां कर्णज्वरो भवेत्, न कदापि चित्तविनोदनम् । शृणुत मन्मुखाद् भिन्नरसात्मकं श्लोकं यस्मिन् काव्यरसस्य लेशोऽपि नास्ति ।

"शरीरमाद्यं खलु धर्मसाधनं"
त्रिदोषहीना तनुरायवासना ।
घृतादिशून्यं पुनरुक्तमाशनं
प्रयाति गृध्नुः सहसा यमालयम् ॥२३॥

मंजुभाषिणी ।—आर्य धन्वन्तरे, तथ्यं कथितं भवता । परन्तु सोऽयं विदूषको भवन्तमेव रामननिकेतं प्रेषयितुम् एषिष्यतीति मे निश्चयः ।

विदूषकः ।—सत्यमुक्तं भर्तृदारिकया । एष आर्यो धन्वन्तरिश्च स्वोदरस्य परिधिं कदापि दृष्टवान् न वेति मे महान् सन्देहः ।

( सर्वे हसन्ति )

मकरध्वजस्य च परमसेवकः वार्धकेऽपि रसविकारपीडितान् पन्थानं दर्शयति स्वानुसृतं महाजनवत् ।

( पुनरपि हसन्ति सर्वे )

विक्रमः ।—मौनमेव शोभनमधुना, मन्दारक !—अनन्तरं मम द्वितीयरत्नं गुणैरद्वितीयो वरिष्ठः क्षपणकः काव्यपरिवेशनं कुर्यादिति मे सनिर्बन्धोऽनुरोधः ।

क्षपणकः ।—देव, मम काव्यं वैराग्यमिव मण्डनहीनम् । किं तत् कस्मैचिद् अपि रोचते ?




मंजुभाषिणी ।—आर्य, कौपीनवन्तः खलु भाग्यवन्त इत्यादि श्रोतुं न पारयामि ।

क्षपणकः ।—( सस्मितम् ) वत्से, मा भैषीः । नाहम् अजिनवसनो भूतलशय्यः सन्न्यासी परन्तु कोपाग्रहो गृहाश्रमधर्मा । अथ न कदाच भावयाम्यनर्थमिति ।

> वैरागस्य हि निगूढानि तत्त्वानि
> न जातु ज्ञायन्ते गृहीकल्मषस्थैः ।
> कैलासे किल रहस्यं रहो दत्ते
> स्मितास्यो दिग्वासा हरो हैमवत्यै ॥२२॥

विदूषकः ।—शृण्वन्तु विश्वे श्वेताम्बरापुत्राः ।

विक्रमः ।—साधु क्षपणक शब्दवारिधे ! अथ वररत्नेन क्रियताम् अमरसिंहेन श्रुतिविनोदो नः खलु ।

अमरसिंहः ।—

> जिज्ञासायामार्य तथा चानुनये क्वापि
> क्वचिद्धि वारणे नञर्थकैः शब्दैः सह ।
> वाक्यालंकारे च विनार्थान्तरयोगं मन्ये
> नियोज्यते सदा पदार्थविज्ञानैः "खलु" ॥२३॥

मंजुभाषिणी ।—( विहस्य ) अर्थकोविद, न कोऽपि भवद्रचितकोषलभ्यान् शब्दार्थान् जिहासते । परन्तु रसतृष्णालवः सभाजनाः । तन् किंचिदपि रसालकं वाक्यं विरच्यताम् । क्व नु काव्यपिपासा शब्दज्ञानस्य उपभोगेन शाम्यति भूयस्तु परिवर्धते वायुना चित्रभानुरिव ।




अमरसिंहः ।—आभिमानिकान् को हि काव्यम् इच्छति दारुच्छेदकान् चारु-
शिल्पवत् । भवतु—

वागर्थौ दीप्तिदिवाकरौ यथा
शायेतां सर्वदा संयुक्तावेव लग्ने ।
आकाङ्क्षा सन्निधिरार्थयोग्यता
कल्पन्ते सिद्धये वाक्यार्थज्ञानकरणे ॥२४॥

विक्रमः ।—युक्तमिदं काव्यं रसक्षरणमपि शब्दार्थविशारदस्य न्यायपारंगतस्य च । अमरसिंहस्य श्लोकः सिंहनाद इव प्रतिभाति मे । किमत्र कस्यापि सन्देहः ?

विदूषकः ।—नहि नहि ! अमरो भवतु कविमृगेन्द्र इत्यमरः ।

( हसन्ति सर्वे )

मंजुभाषिणी ।—

नारिकेलाद् आशीतलं जलं प्राकृतो जनो
लभमानोऽपि गतः कुत्र रसवैचूपदवीम् ।
कण्टकाकीर्णात् खर्जुराद् रसो येन गृह्यते
स भवेत्तुल्यगुणो यथामरशब्दजलधेः ॥२५॥

विक्रमः ।—अनन्तरं म्लान् शंकोः किंचित् श्रोतुकामोऽहम् ।

शंकुः ।— शंकुमेतं सदा शंकासर्पो भीपयते
किं नु वदिष्यामि शास्त्रविदां संसदीह ।
काव्यपेयस्य वा ज्वालासंकाशस्य पुरो
हन्त विभाति क्व दीनखद्योतस्फुलिंगः ॥२६॥




कालिदासः ।—आर्यशंकोः काव्यशक्ते विनयस्य च प्रतियोगित्वं सूचितमत्र ।

विक्रमः ।—बाढम्, कालिदास । युक्तमुक्तं त्वया । चिन्ताधारा ते समवर्त्मगा शंकोरेव ।

शंकुः ।—अनुगृहीतोऽस्मि भूयिष्ठं कालिदासेन समं तुलनया । यावत् कथयामि श्लोकमेकं द्रुतरचितम् ।

वर्षोपायां कीर्णकचा स्तोयदजाले
दिक्कामिन्य श्वासविकम्पा मलिनास्याः ।
क्रन्दन्तीव स्रस्तदुकूला झटिकार्ता
आह्लादन्ते नृत्यरता मत्तमयूराः ॥२७॥

विक्रमः ।—साधु साधु ! शंकुकस्य द्युतिरमला कमनीया च स्वातीतारकाया मृदुज्योतिरिव । शुक्तौ मुक्ताफलमेव शक्नोति जनयितुं पुण्यतिथौ ।

शंकुः ।—पुनरभिनन्दये सुधीवृन्दं कारुण्याकुण्ठम् !

विक्रमः ।—अथ वेतालभट्टः स्तुत्रीकरोतु रसिकमानसं कविकर्णकुहरं च !

वेतालभट्टः ।—देव, किं रचयामि ?

तावत् किन्नरीकण्ठा गायन्त्यत्र वराङ्गनाः
नृत्यन्ति लयतालैश्चंचला मादृशो नागतो यावत् ।
आयाते च काले वेतालाख्येन सभांगनं
मूकत्वमवलम्बन्ते तु ता वाद्यभाण्डं गतं नु क्व ॥२८॥

विदूषकः ।—क्षम्यतां मे वाचालता । नाहं काव्यरसस्य विचारकः परन्तु रसनारसस्य । अपि तु वेतालभट्टेन आत्मानं प्रति वक्रोक्तिः कृता या




कदापि न व्याजनिन्दा। तथापीयं मे भर्तृदारिका वेतालभट्टादेव नृत्यगीतविषयेषु शिक्षां लब्धवती। आचार्यस्य वचनाद् मूढजनैः राजदुहितुर्नृत्यगीतपटुत्वे कटाक्षः प्रतिपाद्यते इति मे वितर्कः।

वेतालभट्टः।—कथमिदं प्रतिपन्नम्? गुरोरपि प्रायशः कालेन शिष्यजनाः श्रेयांसः संजायन्ते। अपिच, पद्मरागाणाम् आकरे क्व जातु काचस्य सम्भवः स्यात्! अहं च प्रियशिष्यां मे न कदापि अपमन्तुं शक्ये।

वररुचिः।—वितण्डायाः किं प्रयोजनम्? भवतः अन्तेवासिषु वरेण्यतमा नृत्यगीताभ्याम् अस्यामेव सदसि स्वपाटवं प्रकटयेद् यदि, तन् सासूया मन्दभाषा अपि मूकीभवेयुः। दर्शनं श्रवणं च निःसंशयं प्रत्ययकारणं।

कालिदासः।—सर्वेऽपि वयं वरवर्णिन्या मंजुभाषिण्याः कलकण्ठारवम् आकर्णयितुं सुतरां कामयामहे। तद् वर्षतु सा संगीतरूपमेव कृपालवम्!

विक्रमः।—मंजुले! श्रावय सभाजनं गीतमेकं श्रुतिसुभगं चित्तहारि च।

मंजुभाषिणी। (गायति)—

वर्त्मलीनः शशी नर्मदा-रोधसि
स्निग्धपवनो वाति छन्दसा मन्दम्।
सुप्तमीनामले दीप्तरेखाजले
फुल्लकुमुदो लाति चन्द्रिका-गन्धम्॥
हंसिके मा कुरु कान्तेन मानद्वन्द्वम्।
वाञ्छनव्याकुलं लाञ्छनावातुलम्
अंजसा मोदय दुःखेन साश्रुस्यन्दम्।
युंजीथाः खण्डिते स्वान्तबन्धम्॥२६॥




विक्रमः ।—किमिव हि मनोरमं सुताया मे संगीतम्! मरालचराकस्य समक्लेशोऽहं संजातः सुरदुर्लभेन स्वरनिस्वणेन। वृन्दाराचार्य वेतालभट्ट, विजयी भवान्। धन्यं तव शिक्षणनैपुण्यम् आबाल्यान् नृत्यगीतयो रतायामपि कन्यायाम्! अथ पण्डितो घटकर्परोऽपि किञ्चिन् निवेदयतु।

घटकर्परः।—तन्न विस्मृतोऽहं महाराजेण। नाहं कविख्यातिलिप्सुः। अध्ययनेन तथाध्यापनया कालं नयामि, न जाने कियच्च मे काव्यक्रीडाकृतित्वम्। भवतु, कृपया यत् नृपर्षभेण कृत आदेशात्तद् ईषद् वक्तुं प्रक्रमे प्रकामं वा न वा।
(सहास्यम्)—

माधवाधः पृच्छति राधा
माधवं पिबसि कान्त माधव!
माधवेन्दो नन्दति राका
मा धवं गमय तां च मा धव ॥३०॥

कालिदासः ।—साधु साधु रसरत्नाकर घटकर्पर! यमकालंकारे कौशलप्रकर्षो लब्धस्त्वया। मधुस्यन्दः खलु काव्यस्तवकस्तव!

घटकर्परः ।—(सदर्पम्)—

"जीयेय येन कविना यमकैः परेण।
तस्मै वहेयमुदकं घटकर्परेण॥"

विक्रमः ।—कुतूहलं मे परमं कारितम्।




विदूषकः।—ईदृशी तु आत्मश्लाघा रसंसदि प्रतिभाति मे मुक्तमुखे तथा शून्यगर्भे घटे कर्पूरवदेव। घटो यथा घोटखुराहतः खर्परीभवति तथान्येनापि केनचिद् घटकर्परस्य दर्पश्चूर्णीक्रियेत इति मे सारांका कामना।

कालिदासः।—शृण्वन्तु कृपावन्तो यमकरचनाप्रयासं ममाभाजनस्य।

"अतिरुचिमानस्तवकः सरस्तटोऽयं चिचीयमानस्तवकः।
इह खलु मानस्तवकः प्रियामिति परोऽनयत् समानस्तवकः॥"१क२॥*

अपि च—

"कुरवाप च सारसकाकुरवान्
कुरवास्यनगोऽपि तदांकुरवान्।
कमलंकृतवद्गगनपंकमलं
कमलं न विलोभयितुं कमलम्॥"१क३॥*

विक्रमः।—कवे कालिदास, घटकर्परस्य दर्पचूर्णि न भविष्यम् अपेक्षते, साम्प्रतमेव घटकर्परेण तेनोदकं वाहयितुं त्वं हि क्षमः। किम् अन्यानि यमकचम्पकानि रचयस्यधुना?

कालिदासः।—काव्यकोविदो मां क्षन्तुमर्हति। यमकालंकारे क्षीणा मे अभिरुचिः। भाषा नराणां भावनाया वाहनं न तु छद्मावरणम्। एषोऽलंकारश्च न सर्वत्र मण्डनं परन्तु प्रायेण गलगण्डमात्रम्।

विक्रमः।—(सस्मितम्) कालिदासस्य सृष्टिसंयमः प्रशंसनीयः। शक्तोऽपि स यमकालंकारं पाशमिव जहाति। अथ ज्योतिर्विदो वराहमिहिरस्य काव्यकलां चन्द्रकलामिव वयम् अभिनन्दयितुम् उन्मुखाः।




वराहमिहिरः ।—

महाकालकान्ति नियतकुटिला कृष्णसर्पस्य तुल्या
करालं भालार्चि भुजगमणिभं द्योतते भाविकाले ।
भयं सूते चाशासहितमहिवत् मायया वर्तमानो
विषाढ्यव्यालात्मा गरलदशनो भूतकालश्च भीष्मः ॥३१॥

विक्रमः ।—(सस्मितम्) त्रिकालज्ञेन कालस्य करालकान्तमेव चित्रितमालेख्यम् ।
अप्येतत् त्वयि उपयुज्यतेऽत्र ? भवतु, वररुचे, अपि त्वमिदं खण्डयितुं
शक्ष्यसे ?

वररुचिः ।—यदाज्ञापयति देवः ।—

धर्मचारकारणाय भूतदुःखधारणा हि
वर्तमानचेष्टनं तु कामवित्तसाधनाय ।
मोक्षलाभयासनैव पूर्यते च भाविकाल
ईश्वरेण कालसृष्टि रीप्सते नृनन्दनाय ॥३२॥

विक्रमः ।—साधु वररुचे ! अद्य प्रभृति त्वम् आत्मानं विक्रमादित्यस्य सभाया
अष्टमं रत्नं गणय ।

वररुचिः ।—अनुगृहीतोऽस्मि । विजयतां महाराजः कविजनबान्धवः ।

विक्रमः ।—अतःपरं कालिदासं प्रति ममानुरोधः ।

कालिदासः ।—नररूपस्य सवितुरादेशो मे शिरसि धार्यम् ।

विक्रमः ।—मन्दाक्रान्तावृत्तम् अतीव दुरूहं पेशलं च वदन्तीति केचन । तद्
अनेनैव छन्दसा रागरसात्मकं स्तवकमेकं रचयेः ।




कालिदासः ।—देवद्विजप्रसादेन स्फुरतु रसनायां मे वाणीचरणमंजीरम् !—

"तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥"क्ष॥*

मंजुभाषिणी ।—( लज्जां नाटयित्वा ) याम्यामीत्ततात !

विक्रमः ।—( कालिदासं प्रति ) मानसी ते प्रिया युवतिविषये स्रष्टुराद्या सृष्टिः स्यात् न वा, परन्तु त्वमेव मनस्विविषये विधातुः रचनस्य परा काष्ठा ।

कालिदासः ।—

कलकोकिला न यदि कूजने रता
यदि हंसिकापि चलिता न लीलया ।
मुनये च साम यदि या न रोचते
तरुणी तथापि चिरमंजुभाषिणी ॥३३॥

मंजुभाषिणीवृत्तेन रचितमिदं वरांगनायै मंजुभाषिण्यै कविनानेन समर्पितम् । अपि सा रोषं न हास्यति ?

विक्रमः ।—न पश्यामि कोपकारणम् । वत्से, महाकविं कालिदासं रत्नपदे वरय । स खलु रत्नमण्डलस्य मे मध्यमणिरेव भविष्यति । केशवो यथा कौस्तुभं तथैवाहं कालिदासं बहुमंस्यामि ।

कालिदासः ।—कृतार्थोऽस्मि कल्पतरोरिव भवतः वाञ्छाफलं परिलभ्य । सर्वशो




जयतु जिष्णुवरो विक्रमघर्मांशुः ।   त्वत्करुणाकरं प्रीतिपूतं कीर्तयामि
मत्कृते काव्यराजौ । प्रथितयशसो गुणवादे च रंस्यते मुखरा वाङ् मम ।

मंजुभाषिणी ।—अभिवाद्यते काव्यनिधिं मुखरैषा मंजुभाषिणी ।

कालिदासः ।—स्वस्ति वाग्देवीकुलकदुहित्रे !

वन्देऽहं धन्यो भारती-पादपद्मे
वन्दे राजेन्द्रं काव्यकामं वरेण्यम् ।
स्मेरास्यां तन्वीं नौमि वाणीस्वरूपां
प्रेमार्थी विश्वान्नौमि विचारशीलांश्च ॥३४॥

विक्रमः ।—( सस्मितम् ) जयतु कालिदास-भारती नित्यभास्वरा मंजुमुखरा !—
समाप्तमद्य सभाकार्यं सर्वाह्लादनजनकम् ।   [ सर्वे प्रस्थिताः ]

इति द्वितीयोऽङ्कः

—रत्नपदप्राप्तिर्नाम—






( अलिन्दस्था मंजुभाषिणी पठन्ती )

मंजुभाषिणी ।—पितुरनुमतिः प्राप्ता मया यत् कविकालिदासात् काव्यरचनशिक्षां लभिष्ये इति। महाकवेश्च विषयेऽस्मिन् पटुत्वम् अविसंवादितम्। मयि तु तत्फलं नाद्यापि लक्षितं त्रिषु वर्षेष्वतीतेष्वपि। कथितं खलु तेनैव मालविकाग्निमित्रे नाटके—

"पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य॥"का॥

भवतु, तद्रचितानि काव्यानि पठित्वा व्युत्पत्तिं प्राप्नुयाम्। पुनरपि, कविसंगेन काव्यप्रीतिर्मे नितरां वर्धिता रुचिश्च चारुतरा संजाता। अधुना स ऋतुसंहाराख्यं काव्यं रचयन्नास्ते यस्मिन् षट्सर्गेषु षण्णामृतूनां विशेषगुणान् वर्णयति। अहो किमपि मधुरः शिशिरवर्णने श्लोकोऽयम्—




"न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम्।
न वायवः......................."

( ततः प्रविशति कस्तुरिका )

कस्तुरिका—किं जपन्ती आस्ते प्रियसखी मे सोच्छ्वासकण्ठेन ?

मंजुभाषिणी।—( सस्मितम् ) कस्तुरिके।

न जप्यते मयाधुना श्रुते वचः स्मितानने
क्व वा कृतं त्वया विना विचारणं रसाग्रहम्।
तिरोहिता बलाहकाः कवोष्णता रवेः करे
स्मराम्यहो नवं कवेः सुशीतलं कथोच्चयम् ॥३५॥

कस्तुरिका।—( सहास्यम् ) कविपदं लब्धवती त्वमपि महाकवि-साहचर्यात्। शीतलं तु कथं नु जातं वर्णनं चित्तविमोहनम् ? किमृतुसंहारस्य शिशिरालेख्यं रचितं तुभ्यम् उपहृतं च ?

मंजुभाषिणी।—अथ किम्। तस्य लेखनी न कदापि मन्दगतिः प्रधावति या पंचशरस्य सायक इव।

कस्तुरिका।—स्थाने कृता त्वया तल्लेखन्याः मन्मथशरेण तुलना। मन्ये लेखनीवाग्मो हृदयं विशति द्रुतवेगेन आहन्ते च कुरंगीवक्षः अकालवसन्ते आगते इव सर्वर्तुषु।

मंजुभाषिणी।—( सनिश्वासम् ) न जाने कदा त्वमाहता शरेण तद्विधेन, कस्तुरिके!




कस्तुरिका ।—( सहास्यम् ) कदा प्रभृति स्थानभ्रंशस्ते विहिता मया ? कालिदासेपुणा आहतामात्मानं पृच्छ अथवा कविवरमेव ।

मंजुभाषिणी ।—सखि, जानामि न स्वचेतोऽपि भ्राम्यति यत् काननात् काननांतरं प्रसक्तः कस्तुरीसारंग इव । कदा लभ्यते मया निर्वृत्तिश्चित्तस्थैर्यदायिका अन्तर्दाहे निर्वापिते वा ?

कस्तुरिका ।—( विहस्य )—

मा कुरु शोकं चित्तरमे
का तव चिन्ता प्रेमहृतौ ।
मानसयात्री क्रीडति नो
भिन्नतडागे हंसवरः ॥३६॥

मंजुभाषिणी ।—कस्तुरिके, तरला मतिस्ते न कदाच यास्यति वास्तवमाहित्वम् । दुःखकालेऽपि परिहासस्ते रोचते किमिति ।

कस्तुरिका ।—न पश्यामि वैक्लव्यकारणम् अतो जिह्वा मे नृत्यत्यामन्थरं परिहास-मंजिरवत् मोदमन्थनाय ।— ( नेपथ्यमवलोक्य ) यास्यामि यावत् । आगच्छति अत्रैव सन्तापनाशनस्ते ज्योतिर्मयः काव्यकण्ठः प्रेमकम्बुस्वनः ।

मंजुभाषिणी ।—कथं पलायितुम् उपक्रमसे ? न खलु महाकवि व्याधो यो मृगांगनां प्रति निक्षिपति विप्रेक्षितवाणम् ।

कस्तुरिका ।—सर्वे हि कटाक्षा स्तवैव लोलापांगकृष्टे स्तुगामिनः । केवलं वक्रोक्तिस्तु समीप्यते मद्विधाम् उपेक्षितां प्रति कविजनेन ।




मंजुभाषिणी ।—न खलु न खलु वक्तव्यम् ईदृशं क्रूरतमं त्वया । कस्तुरिका मृगमदेन विह्वलयति रसिकवृन्दं जनयति चारसिकेष्वपि प्रेमोच्छ्वासम् ।

सान्तर्हासा कस्तुरी या मृगाक्षी
स्वैरकान्त्या प्रान्तरे भ्राम्यमाणा ।
धत्ते कान्तिं प्राकृतप्राणहन्त्रीं
कान्तोल्लासं कुर्वती सा तथापि ॥३७॥

कस्तुरिका ।—( सस्मितम् ) मयाभिलषितं चिरेण मंजुभाषिण्याः प्रेम एव न तु रसिकानामपि इतरजनानाम् । भवतु जयाय ते काव्यारामभृगया ।

[ निष्क्रान्ता ]

मंजुभाषिणी ।—कस्तुरिका मे सखीमण्डले वरिष्ठा प्रियतमा च ।—अहो विस्मृतं मया शिशिरचित्रं तस्यामागतायाम् !

"न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम् ।
न वायवः सान्द्रतुषारशीतला
जनस्य चित्तं रमयन्ति साम्प्रतम् ॥"क६॥*

( ततः प्रविशति कालिदासः )

मंजुभाषिणी ।—स्वागतं कविनाथाय !

कालिदासः ।—(स्वगतम्) कतरः समासः अत्राभिप्रियते कर्मधारयः षष्ठीतत्पुरुषो वा ? भवतु । ( प्रकाशम् ) किं शीतालेख्यं प्रीणयति त्वाम् ?

मंजुभाषिणी ।—अथ किम् । प्रीताहम् अतिशयेन ।

कालिदासः ।—वसन्तसर्गो रच्यतेऽधुना । वसन्तो हि ऋतुराजः सर्वतोऽपदत्त ।




मंजुभाषिणी ।—श्रोष्यामि सत्वरमेव । परन्तु वर्षाचित्रम् अनवद्यं प्रतिभाति मे । आदिकवि वाल्मीकिरपि तत्र त्वयातिक्रान्तः ।—

काव्येषु श्रेष्ठत्वं लब्धं वाल्मीकेर्हि मन्थनादौ
सर्वे च ह्लादं सम्प्राप्ता स्तन्माधुर्ये नित्यस्नाताः ।
वाग्देवीपूजां यावत्तु प्रीत्या कुर्वन्नास्ते नव्यः
सूर्यायाते चन्द्रस्येव ज्योति र्म्लानं प्राचीनस्य ॥३८॥

कालिदासः ।—नैतद् वक्तव्यम् । को नु शक्नोति पराभवितुं कविगुरुं वाल्मीकिमहर्षिम् ? मद्रचितेषु पक्षपातित्वं दृश्यते त्वया । किं कारणं विद्यते अत्रेति कौतूहलं ममाङ्कुरितं रोमहर्षणम् ।

मंजुभाषिणी ।—एकपक्षहठ् न मे विचारणा । शृणु हि यावद् वाल्मीकिकृतात् प्रावृड्वर्णनात् श्चान्यतरं श्लोकमेकम् ।—

"क्वचिन्प्रकाशं क्वचिदप्रकाशं
नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचिन् क्वचिन् पर्वतसन्निरुद्धं
रूपं यथा शान्तमहार्णवस्य ॥"

श्रूयतां चाधुना भवद्रचितान् श्लोकपुंजाद् रम्यबहुलाद् अन्यतरः स्तबकः ।—

"बलाहका श्चाशनिशब्दमर्दलाः
सुरेन्द्रचापं दधत स्तडिद्गुणम् ।
सुतीक्ष्णधारापतनोग्रसायकै-
स्तुदन्ति चेतः प्रसभं प्रवासिनाम् ॥"क०॥*




कालिदासः।—कथं मत्श्लोकं श्रेयांसं मन्यसे? वाल्मीकेः काव्यशैली ज्यायस्येव तर्किता मया।

मंजुभाषिणी।—भवता कृतानि ऋतुवर्णनानि सरलशब्दचयनेन तारुण्यप्रकाशनेन च विशिष्यन्ते। निसर्गजीवने मानवहृदयं लब्धप्रवेशम् इत्यपि काव्येऽस्मिन् प्रतिच्छत्रं प्रकटितम्। वाल्मीकिः स्वयमेव स्वर्लोकगेहाद् भवन्तम् आशिषं वर्षति इत्यत्र नास्ति मे संशयः।

कालिदासः।—पूर्वसूरि वाल्मीकि में सर्वथा प्रणम्यः। मत्काव्ये कापि चेद्द्युती स्थिता सा तत्प्रसादाद् एव।

मंजुभाषिणी।—(सस्मितम्) अस्ति मे साहसिकायाः स्तोकाभियोगश्च। शरदालेख्ये भवता रमण्यो भूयशो विप्रकृता इति। "हंसै र्जिता सुललिता गतिरंगनाना", "श्यामा लताः···क्षीणा हरन्ति···बाहुकान्तिम्" इत्यादि रोषजनकं भवत्येव।

कालिदासः।—(सहास्यम्) रोषोऽपि ते परमं पेशल एव प्रतिभाति मे। आकर्णय च रहस्यम् अत्र। एकदा त्वया विप्रकृतेनैव मया विरचितस्तत्सर्गः। अस्ति पुनः कारणान्तरं च। वरांगनाः खलु प्रशंस्यन्त एव तत्रेति एवंविधं व्याख्यानं च न कष्टकल्पितम्। नववधूरिव रूपान्विता शरद् इति प्रोक्तं मनाक् श्लेषेण। क्षमस्व तथापि मां गर्हितकारिणं वरवर्णिनि प्रियंवदे!—

मन्यु स्तव वस्ते रक्ताभं रूपं स्मितास्ये
मन्ये स्थलाब्जं स्तोकेन स्नातं हिमान्याः।




इन्दीवरनेत्रे यातः स्नैग्ध्यं शीतरश्मे-
र्द्वन्द्वं प्रतिपन्नं रागेण क्रोधस्य चिन्हम् ॥३६॥

मंजुभाषिणी ।—( सस्मितम् ) अलं वैतण्डवादेन । अथ नवतरं किमपि काव्यं रचयिष्यति कविवरः ?

कालिदासः ।—मंजुभाषिणि, जगतः पितरौ उमाहरौ अवलम्ब्य किंचन महाकाव्यं रचयेयम् इति मे उद्‌गमा कामना । अपि स्मरसि पार्वतीरूपाश्रयः श्लोको रचितो मया राजसभायां प्रथमदिवसे इति ? तदैव मे वासनोद्‌भूता यत् तामर्चितुं महाकाव्यं रचयामि । परन्तु त्वामेव दृष्ट्वा सङ्कल्प उदितो रूपचित्राङ्कनस्य ।

मंजुभाषिणी ।—मयि भवान् भृशं स्निह्यति तथापि अहमेव भवन्तं रचनार्थं प्राणोदयम् इत्यत्र मे महान् सन्देहः ।

कालिदासः ।—( सस्मितम् )

"आवर्जिता किंचिदिव स्तनाभ्यां
वासो वसाना तरुणार्करागम् ।
पर्याप्तपुष्पस्तबकावनम्रा
संचारिणी पल्लविनी लतेव ॥"८८॥*

मंजुभाषिणी ।—( लज्जां नाटयति ) अयमपि पार्वतीम् उद्दिश्य रचितः ?

कालिदासः ।—अथ किम् । एकत्रानुभूते मत्कल्पनायां नगेन्द्रनन्दिनी नरेन्द्रनन्दिनी च । एतदपि लक्षितव्यं यद् जगन्मातापि आसीदेकदा उद्भिन्नयौवना तथालोकलावण्यवती च । भस्मीभूतेनापि मन्मथेन तन्महायेन जितः पुनः स्मरजित् ।—




"पुष्पं प्रवालोपहितं यदि स्यान्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥" क१॥*

मा क्रोधं गमो रंजनेक्षणे स्फुरिताधरे ! क्षमार्हो नियतमेव कविजनः कान्तिवर्णनाकाङ्क्षः ।

मंजुभाषिणी ।—( सस्मितम् ) ऋतुसंहारं समाप्य हरगौरीकाव्यं रचयितुं प्रक्रमेथाः ।

कालिदासः ।—ऋतुसंहारं समाप्तप्रायमेव । तदनन्तरं कुमारसम्भवं महाकाव्यं रचयिष्यामि । तन्नाम्नि भ्राता ते कुमारः स्मर्यत एव । तत्र च त्वमेव हि कारणम् ।—

एकांगीभूता निवसति मुदा भारतीसंगता श्रीः
शिप्रा रेवां द्रक्ष्यति विशालतरिरो सञ्जयन्ती स्वकण्ठैः ।
रुद्राकंप्रायं पितरमपि सा भ्रातरं वै कुमारं
सन्तोष्य प्रेम्णा जनयति गृहे स्वर्गशोभां सुतन्वी ॥४०॥

मंजुभाषिणी—सामान्या रमण्यपि प्राप्नोति पौर्णमासीं प्रभाम् अपौरुषेयेण ते प्रतिभार्चिषा प्रतिबिम्बिता । रिक्तेयं परामृद्धिम् आपन्ना । परन्तु भवता प्रतिश्रुति दत्ता मत्पित्रे यद् विक्रमार्कस्य कीर्तिं प्रकटीकरोषि तत् कदा क्रियेत ?




मेघडम्बरमात्रं नर्तयति मयूरं प्रयोजिका यत्र तु नीलकण्ठी।
प्रमदायाः कोऽन्यः समर्थो रसोन्मादं प्रचेतयितुं कविमनसि ?

चासन्तः समयः करोति न पिकं संगीतमुखरं
मेघस्य क्व रवः प्रमोदयति वा नृत्येषु शिखिनम्।
कामं तौ खलु कोकिला च शिखिनी मत्तौ हि कुरुतः
कामिन्या नवकान्तया नरमनः काव्येन रमितम् ॥४२॥

कविमानसी त्वं राजकविसम्भवा। त्वद्विरहितस्य मे किं न हा
प्यति अज्ञातवृत्त आगन्तुकः ? अथवा नियतिः केन बाध्यते ?

मंजुभाषिणी।—आर्यवरेण्य !

सर्वत्र हि विराजन्ते मद्विधाः प्राकृता जनाः।
त्वादृशो वरवाग्मी तु वसुधायां न वर्तते ॥४३॥

अतो दूरीभूतापि एषा अशोच्या एव।

कालिदासः।—नाहं वाग्मी अपि तु वाग्वैभवहीनो व्यामोहं गतः कृपायाचक
त्वं हि मे सचिवः सखीसमा प्रियशिष्या च चारुकलाविदो
सचिवरूपेण मां समाश्वसिहि विचारमूढं किं करोमि क्व गच्छामीति
सखीव अपनोदय विषादमालिन्यं चित्तादर्शात् विदीर्णप्रायात्। शिष्य
देयः स्यात् चेत् कश्चनापि स्तोकोपहारः स दीयतां द्रागेव हृष्टमनसा

त्वमसि मम सचिवः शिष्या सखी च त्वमेव
त्वमसि मम कविना काव्ये रसज्ञा मता त्वम्।
तव हि शरणमनः कांक्षे तमिस्रे रजन्या
झटिति यदि रूपिनं प्रज्वाल्य ज्ञानदीपम् ॥४४॥




आत्मविस्मृतो जातोऽहं किमुत हतचैतन्यः किमु क्लिवः। न जाने किं तु विक्रमार्काय यन्मया प्रतिश्रुतं तत् कर्तुं शक्नोमि न वेति। हीनचेतनो भ्रमरो न प्रभवति मार्गदर्शनाय का कथा मधुचक्रचयनस्य मञ्जुगुञ्जनस्य वा?

मंजुभाषिणी।—कष्टं भोः! न सोढुं शक्नोमीदम्। (स्वगतम्) द्विधा भिन्नं कर्तव्यं प्रतिभायतेऽत्र। पितुर्गरिम्णो वाञ्छयोश्च विरोधः संजातः। मम हृदयं च रोरुयते भृशम् अन्तर्वाष्पम्। भवतु। (प्रकाशम्) न गणयामि मे पित्रभिलषितं भविष्यं न च निर्घृणं तव सुखदुःखानि। परन्तु तव प्रतिभायाः पूर्णविकाशः पितुश्च मे कीर्तिकामना द्वावपि परमप्रियौ मंजुभाषिण्याः। शृणु हि दयित, न यामि स्थिरनिश्चयाऽहं स्वयंवरसभाम्। भगिनी मे मन्दालिकैव गमिष्यति तत्र पित्रादेशो यदि भवेत्। सा तु मदपि सुलक्षणतरा नृत्तगीतपटीयसी च। अतस्त्वं काव्यरचने मनो निधेहि एकाग्रम् अतन्द्रमेव।

कालिदासः।—धन्योऽहं प्रिये! जयतु मंजुभाषिणी प्रेयस्करी प्रियजनस्य। श्रेयसः प्रेयसश्च संमिलनं कल्पते हि लोकहिताय तथा सर्वचित्तरंजनाय।

"श्यामास्वंगं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि सादृश्यमस्ति॥"क०१०१॥




मंजुभाषिणी ।—सादृश्येन किं प्रयोजनम्? अत्रैव तिष्ठामि अदृश्यरूपगुणसम्पन्ना हृतबुद्धिश्च ।

कालिदासः ।—वियोगचिन्तनेनापि प्रसह्य मे हृदयं विमन्थितं निमज्जितमिवाभूद् वैक्लव्यार्णवे सहसा ।

मंजुभाषिणी ।—मम विरहोऽपि काव्यरचने प्रेरणां ते दास्यति इति मे वितर्कः ।

कालिदासः ।—नैतत् कृत्स्नं सत्यम् ।

तावच्छक्ये यापयितुं जीवनयात्राम्
आशावर्ति भास्यति यावद् हृदयान्तः ।
निर्यातायां हन्त नितान्तासुखरात्र्यां
तस्यां छिन्ते सान्त्वनलेशं च कृतान्तः ॥४५॥

मंजुभाषिणी ।—भवत आशालता कल्पलतेव पर्याप्तपुष्पस्तबका भवतु! संचिनोमि क्वचिदेकं स्तवकं कबरीशोभनाय यदि न भवता निवारिता ।

कालिदासः ।—मत्काव्यकुसुमांजलिं त्वच्चरणकमलयोरर्पयामि, मंजुभाषिणि! अद्य प्रभृति कालिदासस्तवैव कृत आज्ञावहः ।

मंजुभाषिणी ।—शान्तं पापम्! त्वच्चरणार्पितं मम जीवितम् । ससर्वस्वाहं खलु त्वदीया संजाता सुखाय वा दुःखाय वा सम्पत्तौ च तथा विपत्तौ निर्संशयचित्ता । गृह्ये न वेति तवैव निरङ्कुशाऽभिरुचिः ।

कालिदासः ।—त्रिदिवदुर्लभे! वसतिस्तव चिराय मद्हृदयवेश्मनि परमादरेण भूयात्! ( कराभ्यां हस्तौ गृह्णाति मंजुभाषिण्याः )—




न पद्प्रान्तयोस्तव गति मर्दन्तास्तु तव पूतपीठं
नियतं दीप्यसे निजभया ननु त्वं रुचिरकाव्यलक्ष्मीः।
कुसुमै रर्च्यसे च कविना वरार्थं प्रणयरागताम्रै-
र्यदिदं मामकं हि हृदयं सदेवास्तु सुचिरं सवैव ।।४६।।

( ततः प्रविशति कंचुकी )

कंचुकी ।—जयतां भर्तृदारिका ! श्रीमन्महाराज एव अत्रागच्छति ।

मंजुभाषिणी ।—सत्वरं प्रवेशय पितृदेवम् ।

( कंचुकी निष्क्रान्तः )

कालिदासः ।—आश्वस्था भव । लेखनीं गृहीत्वा किंचनापि लिखितुम् आरभस्व ।

मंजुभाषिणी ।—( विहस्य ) नास्ति भयस्य कारणम् ।—यावद् यद्तु किं चकार पार्वती यदा छद्मवेशं परित्यज्य स्वरूपेण आविर्भूतः पिनाकपाणिरिति ।

कालिदासः ।—सचकितं सा मोहमापन्ना ।—

"तं वीक्ष्य वेपथुमती सरसांगयष्टि-
निक्षेपणाय पदमुद्धृतमुद्वहन्ती···"

( ततः प्रविशति विक्रमः )

कालिदासः ।—देव, भवन्तम् अभिवादये !

मंजुभाषिणी ।—पितः, अपि कुशलं ते ?

विक्रमः ।—अथ किम् । उपविशताम् उभौ । काव्यचर्चायां व्याघातः कृतो




मया कमलकानने मत्तद्विरदेन इव मन्ये। किं वदन्नास्थाः कालिदास यदाहं प्राविशम्?

कालिदासः।—मंजुभाषिण्याः प्रश्नस्य उत्तरम् अयच्छं त्रिलोचनं दृष्ट्वा किं चकार गन्तुकामा अपर्णेति।

विक्रमः।—श्रावय तावत् माम्।

मंजुभाषिणी।—पितः, यास्यामीतः कार्यान्तराय।

( मंजुभाषिणी आसनाद् उत्थिता )

विक्रमः।—कथं कार्यान्तरं जातं मयि आगते एव? उपविश्यतां सङ्कोचम् अपावार्य आत्मवश्या।

कालिदासः।—ब्राह्मणवटो महादेवरूपं दृष्ट्वा आकुलीभूय पर्वतात्मजा जगदम्बा।—

"तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥"क११॥*

विक्रमः।—श्लोकोऽयम् अतीव मनोज्ञः। उपमा ते अपूर्वा वर्णनं च वर्णाढ्य-चित्रवत्। मनश्चक्षुषा पश्यामि शैलसुतायाः व्याकुलताम्। महाकाव्यस्य सम्भावना विद्यते अस्मिन्नेव।

कालिदासः।—शिरसि धृत्वा तवाशिषं रचयामि नातिविलम्बं कुमारसम्भवाख्यं महाकाव्यम्। तवैव स्नेहच्छायायां वर्धते मे काव्यशक्तिः।

विक्रमः।—परम तोषः प्राप्तो मया। चिरं जीवतु कालिदासः!




कालिदासः ।—नमामि कविजनपालकम् । अधुना विदायो याच्यते मया । यास्यामि दूरस्थां पल्लीं कार्यव्यपदेशात् ।

विक्रमः ।—गच्छ चित्तमोदनाय पुनरागमनाय च ।

( कालिदासो निष्क्रान्तः )

कुमारेण सह कालिदासस्य सख्यं द्वयोरपि हर्षवर्धनम् । मन्दालिकाया च स स्निह्यति स्वसृकल्पायामेव । परमो बन्धु र्जातो नः कालिदासः । ( कन्यामवलोक्य ) कथं त्वं तूष्णीम् आस्से ?

मंजुभाषिणी । ( सस्मितम् ) नास्ति मे विराग स्तस्मिन् ।

कथं संजायतेऽमर्षो मंजुलायाः कविं प्रति ?
निरंजनो गुरुश्चित्त-रंजनस्य चिरं क्षमः ॥४७॥

विक्रमः ।—दूरीकृता तव वाचा महती मे शंका । अस्ति पुनश्शुभसुन्दरः संवादः । स्वयंवरस्य ते सम्पूर्णम् आयोजनम् । कन्या मे यास्यति पतिगृहं सत्वरमिति हृदयं मम सोत्कण्ठं युगपत् हर्षामर्षदोदुल्यमानं च । तथापि सर्वमिदं क्षेमाय हि कल्पिष्यते ।

मंजुभाषिणी ।—तात, नाहं यास्यामि पित्रालयात् कुत्राप्यन्यत्र—

विक्रमः ।—कथमेतत्, मंजुभाषिणि ! बालचापल्यसुलभा वागेषा परिहार्या । निमन्त्रिताः सर्वे राजकुमाराः स्वयंवरसभायाम् । नैष कालो लघुवचनस्य ।

मंजुभाषिणी ।—नाहं चापलप्रणोदिता । काव्यचर्चायां जीवनम् अतिवाहयामि इति मे दृढसंकल्पः । विवाहो न रोचते मे ।

विक्रमः ।—वत्से, गार्हस्थ्यं चतुराश्रमाणां द्वितीयः क्रमः—आर्यसंस्कृति-ध्वजवाहो मन्यते विक्रमार्को निखिलसुधीभिः । कथं प्रोत्सहे निज-




कन्याया विवेकहीनत्वस्य हेतो विपरीतम् अनार्यमार्गम् अनुसर्तुम्? अपि च, समाजाचारात् न चिरं तिष्ठेद् दुहिता जनकनिकेतने कौमार्यव्रता। लोकसंग्रहार्थैव प्रवर्तते परिणयप्रथा सर्वथा। कथं च खलु परिणयः काव्यसाधनायाः प्रतिबन्धको जायते?

आश्रमचतुष्टयं विहितं वेदविद्भि-
र्वाञ्छितफलाप्तये मनुजानां शुभार्थम्।
धर्मधनकामदं भवति प्रेम मन्ये
शास्त्रविधिनैव चेत् परिणीतौ युवानौ ॥४८॥

मंजुभाषिणी।—द्विचारिणी भवितुं न शक्ये। हृदयं मम समर्पितमेव कस्मैचिद् वरवर्याय।

विक्रमः।—आः परुषभाषिणि दुर्विनीते! नैतद् युज्यते त्वयि आजन्मनः स्नेहपोषितायां न्यायचारपालितायां च। पुन रीदृशवचनम् असत्यमिव प्रतिभाति मे। अपि भ्रमेण मोहवशाद् वा अशोभनम् आचरितं त्वया? केनापि दुराचारेण वा विप्रकृता त्वं सरलमनाः?

मंजुभाषिणी।—कथम् अनाचरणीयं क्रियते तव दुहित्रा? भ्रमस्य च नास्ति कारणं चिरसन्मार्गसेवायाः। शृणु पितः, ज्यानिक्षिप्तः शरः कथं समावर्तते कथं वा मूलाद् उत्तिष्ठति शाखाच्युतफलम्? सकृद् उच्चार्यते वाक्यं सकृत् कन्या प्रदीयत एव।

विक्रमः।—न दत्ता मया कन्या कस्मैचन जागरे स्वप्नेऽपि वा।

मंजुभाषिणी।—किमर्थं तु आयोज्यते स्वयंवरसभा? स्वयंवृताहं न जातु यातुमर्हामि स्वयंवराय पुनरपि। पुरा किल अश्वपतिसुता सावित्री




एतादृशं निर्वाचनं चकार। सा च पुण्यश्लोका भारतयोषितां मूर्ध्नि तिष्ठति। नारीश्रेष्ठा येन गता स एव मम च पन्थाः। मया वृतश्च स्वजन लोकोत्तरचरितः। अतः भवेयं यद्यहम् अन्यस्मै प्रयच्छामि परमात्मनम्।—

स्वयंवरा वृता या तु शास्त्रविदः महात्मनः।
कथं सा यतते सौम्य कुशीलं धर्मदूषणम् ॥४६॥

विक्रमः।—अहो बत महद् अनार्यं कर्तुं व्यवसिता त्वम्! अवश्यन्तां नूनं गमिष्यामि स्वयंवरसमायाम् अचिरभाविन्याम्। निमन्त्रिता राजन्याश्च युद्धाय प्रयतिष्यन्ते।

मंजुभाषिणी।—कस्मात् खलु बिभेति वीरेन्द्रो विक्रमार्कः कुमारपिता स्कन्द-पितामहः? अपि ते खड्गा जाता निशानहीनाः? किं ते सायका गतिरहिता तथा धारारिक्ता मौर्वी च श्लथीभूता? कथं विचारयसि मालवसेना क्लैव्यं समाश्रिता जडत्वमाप्तेति? परन्तु, नास्त्यत्र कलहस्य किमपि कारणम्। मन्दालिकैव भवतु स्वयंवरसभामण्डना। सा च प्राप्तयौवना विदुषी रूपलावण्यवती। मयि तु अनधिगम्यायां तस्या लाभः सौभाग्यमेव सूचयिष्यति निर्वाचितस्य।

विक्रमः।—मन्दालिका क्रीडामयी बालिकैव। कश्च स दुराशयो येन त्वं लज्जाहीना कृता? केन गृहीता त्वं रहसि तस्करेण?

मंजुभाषिणी।—न केनापि अपहृताहं स्वतन्तु हृदयं मे दत्तं तस्मै। पूत-चरितश्च तत्रभवान् न कदापि दुरात्माथवा अनार्याचारः। तेन च विक्रमार्कस्य यशोमयूखा विकीर्यन्ते दशदिक्षु ज्ञानानन्दहेतवे।




विक्रमः ।—अतस्त्वं कालिदासम् उद्दिश्य ब्रवीषि । चौरकर्म साधितं तेन स्नेहाश्रितेन, मन्दभाग्ये !

मंजुभाषिणी ।—कालिदास एव वृतो मया । परन्तु न गर्हितं सम्भवति तस्मिन् । त्वमपि भवितव्यं मत्वा क्षमस्व सर्वम् । यदेत्र भवतोऽभिलाष स्तदहम् उल्लङ्घित्वा वहिरेव यास्यामि कुत्रापि ।

विक्रमः ।—( सनिश्वासं सक्रोधम् ) अत्रैव निर्जनकक्षे स्थानं लभ्येत त्वया । परन्तु दुराचारः स प्राप्स्यति सर्पभोग्यं निर्वासनदण्डम् ! काव्यालोचनद्रुमस्य अयमपि विषमयः प्रसवः !

मंजुभाषिणी—पितः, श्रुतं कविजनात्—

> "संसारविषवृक्षस्य द्वे फले अमृतोपमे ।
> काव्यामृतरसास्वादः संगमः सज्जनैः सह ॥"

परन्तु भवान्····

विक्रमः ।—( सरोषम् ) विरम विरम वाचाले विकृतरुचे ! न शक्नोमि श्रोतुं काव्योपदेशं त्वन्मुखात् ।—

> पितॄनानन्दयति या हि कन्यका
> नन्दिनी सा कथ्यते निरुक्तविद्भिः ।
> कुपुत्री हन्त ननु वंशपांशुला
> दुस्सहा संजायते चिराय पित्रोः ॥४७॥

मूढोऽहं येन अज्ञानकुलशीले तस्मै विश्वासः स्थापितः । स्वात्मजामपि नाजानाम् इति मे परमोऽनुतापो दुर्निवारः ।




मंजुभाषिणी।—तव निदेशं शिरसि करोमि। कः खलु भवितव्यं खण्डयितुं क्षमः? कालिदासस्य कविप्रतिभायाः स्फुरणं मयैव कृतमिति तेनैव उक्तम्। तस्य काव्यरचनं व्याहतं स्यादिति शंका यथा व्यथयते मां न तथा स्वभाग्यरिष्टम्।

विक्रमः। अलं वागाडम्बरेण। गच्छ तावद् अन्तःपुरम्। अश्रुपातेन प्रायश्चित्तं कुरुष्व पदस्खलनस्य स्वधर्मात्।

मंजुभाषिणी।—अंजसा गच्छामि। परन्तु क्रन्दनस्य कुत्र कारणम्? निर्वासितोऽपि कालिदासो रचयिष्यत्येव काव्यपुंजम् अपूर्वम्।

विक्रमः।—पितुः दुःखं न कल्पते तव मनागपि अनुशोकाय।—दौवारिक! दौवारिक!

(ततः प्रविशति दौवारिकः)

दौवारिकः।—विजयतां....

विक्रमः।—जयवाक्येनालम्। प्रधानामात्यं विज्ञापय यत् मदाज्ञया वर्षभोग्यं निर्वासनदण्डं लभ्यते स्वाधिकारप्रमत्तः कालिदासः।

दौवारिकः।—महाकविः.... ?

विक्रमः।—नास्ति द्वितीयः कालिदासो मद्गृहे। सत्वरं याहि मुख्यामात्यसमीपम्।

दौवारिकः।—(सप्रकम्पम्) यदाज्ञापयति देवः।

(प्रस्थितः)

विक्रमः।—हा विप्रलब्ध विक्रम! हा क्रूरकर्मन् कालिदास! हा मूढ...

(निष्क्रान्तः)




मंजुभाषिणी ।—पितापि भृशं कष्टं गतः । ( रोदिति ) ( क्षणं विचिन्त्य ) क्रन्दनं न शोभते । आयातः कालो दृढसङ्कल्पस्य तपश्चारणस्य च । न विक्लवा स्यान् मंजुभाषिणी काठिन्यव्रता । ( गायति )—

मनीषिशिरोमणे प्रवासनिकेतने
क्रियतां मे वाञ्छास्मरणम् ।
वियोगहुताशने ददातु दिने दिने
रतिनाथः कान्त्याहवनम् ।
वराकी वियोगिनी
सती मंजुभाषिणी
कुर्वीत नैकपदं स्वर्वेणियन्त्रम् ।
त्वं हि प्रभो मदीयं भवैकरक्षम् ॥५१॥

( अश्रु निराकुर्वन्ती निष्क्रान्ता )

इति तृतीयोऽङ्कः

—निर्वासनदण्डं नाम—






( रामगिर्याश्रमे निषण्णः कालिदासः )

कालिदासः ।—निर्वासितस्य मेऽष्टमासा गताः तनूर्मम क्षीणीभूता नाश्रमक्लेशात्तथा यथा प्रियाविरहतापेन। काननभूमिरत्र च स्मृतिसंकुला।

"आरक्तकोटिभिरियं कुसुमैर्नवकन्दलीमलिनगर्भैः।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः॥" क०४॥*

( क्षणं विचिन्त्य ) परन्तु उज्जयिन्याः कोलाहलाद् दूरमागतस्य मे काव्यनिर्माणस्य लब्धः पर्याप्तोऽवकाशः। समाप्तप्रायं कुमारसम्भवम्। जगतः पित्रोः प्रेमचित्रणम् अतीव दुष्करमेव। मया तु विचारितमेतद् द्वयोः प्रणयस्य क्रमविकारो मानवीयस्य अनुरूपः स्यादिति। मनुष्यकल्पना नरलोकरीतिम् अतिक्रम्य कथं नु प्रवर्तते ? तथाहि—

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।"

नूनमहं जाने न कदापि मे रुच्यत उमाहरौ मुक्तपक्षकल्पनाया हेतो-




स्तथान्तरंगाद् वर्णनाच्च। नाहं सर्वज्ञ इति यदमराणां क्रियाकलापम् अन्तश्चक्षुषा परिदृश्य प्रकृततथ्यं लभेयम्। न च विद्यते षष्ठमिन्द्रियं ज्ञानकारणं मम। धर्मस्य तत्त्वं निहितं गुहायाम् अलभ्यं च मादृश-जनस्य कविधर्मवित्तमात्रस्य। तथापि मे दृढविश्वासो यदेषा काव्याराधना प्रीणयिष्यति दुर्गाशुतोषौ भक्तवत्सलौ।

धर्मस्तु काव्यं मम नास्ति चान्यो
धृत्वै हि कालं कलयाम्यतन्द्रम्।
गंगोर्मि-ताने रमते मूर्ध्ना य-
स्तुष्टः स भूयात् मयि चन्द्रमौलिः ॥५२॥

( विचिन्त्य ) देवतात्मा हिमालयो नितराम् आकर्षयति मन्मानसम् अनुरागमिश्रितेन चमत्कारितेन। नगाधिराजस्य वन्दनमेव कृतमादौ मया कुमारसम्भवे। न जाने कदा शान्तिं लभेयं तस्य तुषारस्निग्धे पुण्यासंगे इति। अहो !—

"भागीरथीनिर्झरसीकराणां
वोढा मुहुः कम्पितदेवदारुः।
यद्वायुरन्विष्टमृगैः किरातै-
रासेव्यते भिन्नशिखण्डिबर्हः ॥"क१३॥*

( ततः प्रविशति वररुचिः )

कालिदासः ।—वररुचे, अपि सम्पन्ना ते कन्दफलमूलमृगया ?

वररुचिः । ( सहास्यम् ) अथ किम्। परन्तु मृगयाशब्देन विशदीभवति ममान्वेषणस्य उद्देश्यमिति मन्ये।




कालिदासः ।—(सस्मितम्) बाढम्। कौतुकार्थमेव भणितमीदृशम्। मृगयाकारिवन् तु प्रदर्शयसि त्वम् उत्साहं प्रत्युत्पन्नमतित्वं च। तदहम् अवदं मृगयार्थी वररुचिरिति। नाभिप्रेतो मया विप्रवरे दोषारोपः। भवतु, कीदृशं फलं लब्धं त्वया ? मा फलेषु कदाचन इत्यादि महाजनवाक्ये मम मनागविश्वासः सूच्यतेऽत्र। न तु अभीप्स्यते श्रद्धाहीनत्वं कदाचन। किं ते पीनोदरा पेटिका तिन्तिडीबदरिकासदृशैः पूर्णा फलान्तरै र्वा ?

वररुचिः ।—(सहास्यम्) वररुचे रुचिरोपचारतरा। जम्बुर-रसाल-पनसैरेव परिपूर्णा पर्णपेटिका। अपि सौरभं न लक्ष्यते भवता ?

कालिदासः ।—गन्धविषयेषु न मे सूक्ष्मेन्द्रियशक्तिस्तथा यथा स्यात् श्रवणेन्द्रियग्राह्यवस्तुषु। अपि भूयसी कुशलता तव घ्राणेन्द्रियकर्मणि ?

वररुचिः ।—न तादृशं नैपुण्यं चेत् कथं भवतः पदांकमनुसृत्य रामगिरिमागतः। न केनापि निर्वासितोऽहं न च कापि प्रतीक्षते मामुज्जयिन्यां पुनर्मिलनाय विरहविधुरा साश्रुनेत्रैकवेणी वाङ्मंजुला प्रेयसी।

कालिदासः ।—(निश्वस्य) किं वररुचिरपि मामीर्ष्यति भाग्यविमर्दितम् ? अहो ! सहसा स्मृतिसरण्यागता साभिमाना मंजुभाषिणी। चित्रावलिवद् दृश्यते मानसनेत्रेण प्रियायाः नित्याचरितम्।

स्मरसि वररुचे किं स्निग्धशिप्रातटान्ते
　　विरलविहरणाया अंघ्रिचारं प्रभाते ?
किमुत कुतुकवोपं पुष्पितं नर्मशैलं
　　स्मरसि च निशि तस्मिन् काव्यचर्चाभिसारम् ।२३॥




वररुचिः ।—बाढम् । न वररुचि हृदयहीनः कृतघ्नो वा । तथापि नाहं कातरतां गतो न च रोदिमि स्वप्नेऽपि विशालावियोगस्य हेतोः ।

कालिदासः ।—सखे, त्वमेव सुखी यतस्ते कामना परिमिता तथाभावश्च स्वल्पः ।

कामनैव तनुते कनकमृगी
स्वार्चिषा हि कुहकं हृदयरत्नम् ।
कल्पते न छलनाय रभसिनी
तां वृणाति यदि नात्र तु मतिमान् ॥४४॥

तरुणवयाश्च त्वं न जानासि प्रणयपीडनम् असहनीयम् । परन्तु मदर्थमेव राजसभाया आनन्दम् आदरं च विहाय बान्धवहीनं निर्जनं वनान्तमिमम् आश्रितवान् आम्रकूटसानौ ।

वररुचिः ।—न स बन्धुहीनो महाकवि रुदारात्मा कालिदासो यस्य सखा गुरुश्च । त्वदर्थं जीवितमपि शक्नोमि त्यक्तुं का कथा राजधानी-समादरस्य । किमिवोक्तं त्वया कुमारसम्भवे—

"मधुश्च ते मन्मथ साहचर्या-
दसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य ॥"क१४॥*

अनादिष्टोऽपि सव सहचरो वररुचिर्लक्ष्मणो यथासीद् रामचन्द्रस्य । अहो ! कुमारसम्भवरूपस्य रत्नकोषस्य अहमेव असपत्नो भाण्डारिकः ! अनेन सदृशं काव्यं न भूतं न भविष्यति ।

कालिदासः ।—आनन्दोच्छ्वासस्तव सुतरां तोषयति माम् । परन्तु एतेन




कवीनाम् अन्येषाम् अनादरः कृतो मम च सृष्टिशक्तिरवसिता इति ज्ञाप्यते व्यञ्जना। प्रशस्तिप्रमत्त, कथं भवति मे काव्यरचनस्य सूचनाकाल एव सौन्दर्यसृष्टे रुपसंहारः? अद्यापि त्रीण्येव रचितानि काव्यानि येषु एकतमं नाटकम् अन्यच्च खण्डकाव्यम् अन्यतरच्च महाकाव्यम्। एतैभिरपि परितृप्त स्त्वम्?

वररुचिः।—बाढम्। परन्तु जानामि उद्भावनी शक्तिस्तव बहून्यपराणि काव्यानि प्रदास्यति विश्वजनेभ्य इति। निर्वासनकालश्च अद्यातीतप्रायः।

कालिदासः।—(नेपथ्याभिमुखम् अवलोक्य) वररुचे, पश्य पश्य खलु वप्रक्रीडारतं प्रेक्षणीयगजमिव आश्लिष्टसानुम् अम्बुदम्! अद्य हि आषाढस्य प्रथमदिवसे ममान्तर्वाष्पस्य विरहाश्रुरूपेण धारापातो भविष्यत्येव। (सहसा विचलितम्)—हा मंजुभाषिणि! काव्या-स्वादकारिणो रावयोर्गता हि ते दिवसा परमरमणीयाः।

घ्निताः कृत्स्नवान्धाभि र्दिवसा स्तिमिराञ्जनाः।
सञ्जाता मम शर्वर्यो ज्योत्स्नाहीना अरुन्तुदाः ॥५५॥

वररुचिः।—न खलु न खलु रोदनं साम्प्रतं, सखे, गतप्रायं यदा निर्वासन-वर्षम्। विलापश्च धीरस्य गौरथोपमस्य ते नितरां व्यथयति वररुचिम् अनुचितकर्माणम्। नासीद् युक्तं मया विशालास्मृते र्विमन्थनम्।

कालिदासः।—न त्वम् अपराध्यसि मे। सखे, मेघालोके सुखिनोऽपि चेतो भवत्यन्यथावृत्ति किं पुनः कण्ठाश्लेषप्रणयिनि जने दूरसंस्थे!

वररुचिः।—न शक्यामि प्रबोधवचनम् उच्चारयितुम्।




व्यामोहपन्ने चपलात्मनीह
प्रबोधवाक्यं वदितुं यतिष्ये ।
धीरोऽप्युदात्तो यदि भाग्यदिग्धः
स्वयं न जाने किमु सान्त्वनं वा ॥५६॥

यावदहम् उटजं गत्वा भोजनव्यवस्थां करोमि ।

( निष्क्रान्तः )

कालिदासः—स्थाने खलु वररुचिना निस्संगः स्थापितोऽहम् । अश्रुपातेन हृदयदाहं निर्वापयामि । ( तूष्णीं स्थितः )

( क्षणात्यये उत्थाय नेपथ्यं चावलोक्य )—

"आलोकयति पयोदान् प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥" क १५॥

( सहसा )—दूतरूपेणागतो मेघोऽयं सुदर्शनो वारिमेदुरश्च । एतमेव प्रेषयामि साकूतम् उज्जयिनीं प्रियासम्भाषणार्थम् ।

( कुटजपुष्पाणि दृष्ट्वा )

कल्पितैः कुटजकुसुमैः रत्यं रचयित्वा मेघदूतमाह्वये ।

( तथा करोति )

भोः विद्युन्माल जलद ! पुष्करावर्तकानां भुवनविदिते वंशे जातस्त्वं देवराजस्य च कामगति वर्णावह त्वमेव । अतो विधिवशाद् बन्धुभ्यो विच्छिन्नोऽहं प्रार्थित्वं गत त्वयि । इन्द्रचापचर्चित, सन्तप्तानां चिरशरणं त्वमेव । धनपतिक्रोधशापस्य मे सन्देशम् अलकापुरीस्थितां प्रेयसीं प्रापय ।




( ध्यानस्थ स्तिष्ठति निमीलितनयनः )

"उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापांगैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥"क १६॥*

( ततः प्रविशति वररुचिः )

कालिदासः ।—( स्वगतम् ) कथिसत्य जीमूत, त्वय्युपनीते कुबेरनगर्यां मन्निकेतनं यदि मे दयिता लब्धस्वप्नसुखा स्यात्, तन्नूनं स्तनितविमुखो याममात्रं प्रतीक्षस्व । अतःपरं स्वजलकणिकाशीतलेन समीरेण तामुत्थाप्य गच्छ तस्यै मत्कथितं सन्देशम् ।

"तामायुष्मन् मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥"क १७॥*

वररुचिः ।—कष्टं भोः । बन्धुर्मे तन्मयः सन् विलपति ।

कालिदासः ।—( स्वगतम् )—

"शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृश्यस्-
तामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥"क १८॥*




वररुचिः ।—( स्वगतम् ) संयोगो हि वियोगस्य संसूचयति सम्भवम् ।
विरहेणापि परिवर्धते पुनर्मिलनस्य दीप्तोल्लासः । इत्थमस्य महाकवेर्विप्रयोग-विषादे च बीजांकुरवत् तिष्ठति सम्भावना नवतरकाव्यस्यैव । आदिकाव्यस्यापि जन्मासीत् किल वाल्मीकेः क्रौंचीक्रन्दनकातरस्य महति चेतसि हिमाद्रिस्नेहच्छायाश्रितस्य । दुर्लभं खलु सुखं जगति परन्तु न शोकः साम्प्रतं तस्य हेतोरेव ।

सुखे गते सुलभपदं महीतले
न धीमता लघुमतिभिस्तु नन्द्यते ।
दुरासदे भवति महाजनैरपि
प्रलाप्यते किमपि मनोज्ञवाचनैः ॥५७॥

कालिदासः ।—( स्वस्थो भूत्वा ) सखे वररुचे, आत्मानं विस्मृतवानहं क्षणम् । मनसा विशालाम् उपेत्य प्रेयसीं मदीयां प्राभापे श्लोकैर्मन्दाक्रान्ताछान्दसैः ।

वररुचिः ।—एतेन भवतः क्लेशोपशमो जातः । अथ तूर्णमेव मन्दाक्रान्ता-वृत्तेन काव्यमनवद्यं रचयतु सर्वार्थम् ।

कालिदासः ।—तथ्यमुक्तं त्वया । अद्यैव काव्यरचनम् आरभे, हितप्रियवादिन् ! राजराजस्य अनुचरः कश्चिद् यक्षः प्रतिनिधिर्मे भविष्यति । उज्जयिन्याः पदं प्राप्स्यते कुबेरपुर्यालकया कल्पलोकेनेव । परन्तु पथिमध्ये उज्जयिनी च वक्रपथेनापि अभ्रदूतेन द्रष्टव्या । सखे, महद् दुष्करमेव महाकाव्यस्य भवेत् प्रभवः एषा चिरन्तनी रीतिरिति प्रतिभाति मे ।—




हर्षमात्रं न क्वापि कल्पते निःश्रेयसकामिनां प्रपञ्चनिवृत्तये ;
कुत्र स्रष्टुं पल्लोभ्य पेलकाम् कल्याणकनिर्भरं रसेप्सुनिकरम् ।···

वररुचिः ।—····

तमिदृशं कारुण्यहेतुकं स्फूर्तं यदि मानसे महात्मनस्तु कवेः ;
निःस्रवः स्यात् काव्यामृतझरो वाल्मीकिमुखाद्यथा विनिर्गतश्च पुरा ॥४८॥

(विहस्य) समचिन्तना हि महामनस्काः ! मयापि मनसि भावितम् इदृशमेव क्षणपूर्वम् ।

कालिदासः ।—अथ किम् । परन्तु परिहासच्छलेनापि नात्मानम् उपहसितुमर्हसि । न खलु दीनमानसः प्रेमपीयूषपूर्णचित्तो वररुचिः । वररुचियत् भवनमु सर्वबन्धुषु अमराखण्डरूपं धारयिष्यति वसुन्धरा ।

स्वर्गो रम्यः क्व भवति सखे कुत्र वा तत्प्रतीपो
मर्त्ये मूर्तं त्रिदिवमनिशं नारकाश्चेह वृत्ताः ।
मर्मग्लानि दहति मनुजान् रौरवप्राप्तान् हि
पुण्यप्रीतिः जनयति दिवश्चारुमत्रैव कान्तिम् ॥४९॥

वररुचिः ।—वर्षितममृतं सुमधुरवचसा ! प्रीतोऽस्मि भूयिष्ठम् अमृतस्यन्देनैव । आवयोराहारकालः समायातः । आगच्छतु सखिप्रियतावत् क्षुन्निवृत्तये ।

कालिदासः ।—क्व गता मे क्षुधा यावत् काव्यरचनातृष्णा मां बाधते ! नाहारं करिष्यामि अद्य । याहि त्वमेकाकी भोजनाय । एष ते बान्धवस्यानुरोधो वर्षीयसश्च निर्देशः ।

वररुचिः ।—यथा निर्दिष्टोऽहं तथा करोमि । (निष्क्रान्तः)




कालिदासः।—नीचैर् गच्छत्युपरि च दशा चक्रनेमिक्रमेण। दुःखं विना न केनापि सुखमत्र लभ्यते। विरहपीडितस्य मे कदा तु सुखलाभो भवेत् दिष्ट्या !

( ततः प्रविशति सानुमती )

कालिदासः।—( सस्मितम् )

आगच्छ वरदे देवि सानुमति सुलोचने !
वृत्तेनानुष्टुभा कुर्वे रूपस्य तव कीर्तनम् ॥६०॥

सानुमती।—( सभ्रूभंगम् ) कथं दीनां माम् उपहसति भवान् ? नाहं वरदा देवी परन्तु कृपाकणकामा शैलदुहिता। आगताहं भवन्तं नमितुं वाणीसुतमुखाद् काव्यबिन्दुम् आस्वादयितुम्।

कालिदासः।—कदा प्रभृति स्पृहयसि मन्मुखसम्बन्धानि वस्तूनि ?

सानुमती।—( लज्जां नाटयति ) द्व्यर्थकं वाक्यं कथं विधीयते ? पुण्याधर-निःसृतं काव्यरसमेव पातुमिच्छामि न तु किंचिद् अन्यन् निगूढम्।

कालिदासः।—( आत्मगतम् ) शुद्धान्तदुर्लभम् इदं वचस्तु परमसरलाया आरण्यकायाः। ( प्रकाशम् ) वरानने, सत्यं ते रसतृषा काव्यास्वादेन तर्पिष्यते। नवं काव्यं रचयामि अत्रैव।

सानुमती।—कीदृशं काव्यं, महाकवे ? किं कुमारसम्भववद् अन्यदपि महाकाव्यम्।

कालिदासः।—न महाकाव्यं परन्तु खण्डकाव्यं मन्दाक्रान्तावृत्तेन। सलील-



मन्दगतिस्तव प्रेरणां दास्यति मे। यास्यति मेघदूतो वार्तावहरूपेण गुह्यकपुरीम् अलकां नाम।

सानुमती।—कथंकारं नु सन्देशं वक्ष्यति चिराजीवो नरवाच्यवंचितश्च तोयदः? गीरेषा वंचितेव प्रतिभाति मे, आर्य!

कालिदासः।—नानृतम् उच्यते सानुमत्या। क्व खलु धूमज्योतिसलिलमरुतां सन्निपातो मेघः क्व च पटुकरणप्राणिभिः प्रापणीयाः संवादार्थाः। परन्तु न ज्ञायते त्वया अनाप्तप्रेमृणा तरुण्या यद् विरहविधुरा जनाः चेतनाचेतनेषु प्रकृतिकृपणा भवन्त्येव।

सानुमती।—नाहमद्यापि बालिकानभिज्ञा स्वभगी तु उद्भिन्नयौवना। भवतु, अपि विरहतापम् आत्मनः श्लोकैः निराकरिष्यति भवान्? नाहं भाग्यहीना भवते लेशमात्रमपि चित्तोल्लासं दातुं शक्ता।

कालिदासः।—कथमेतत्, सानुमति लोचनलोभने! न केवलमात्मनः परन्तु निखिलनराणां वियोगिनां वैक्लव्यं प्रकाशयामि कुबेरानुचरस्य साहाय्येन। शाश्वती वार्ता भविष्यत्येषा प्रोषितभर्तृकार्था।

सानुमती।—चातुरी नाधिगता मया न शक्नोम्यनः अपरेषां चतुरवाक्याना-मर्थं ग्रहीतुम्।—

जाने यौवनं नीतापि शैलजा
खलानां चातुरीं छद्मानि वै तथा।
वचांसि व्यंजनागूढानि सर्वथा
कथं वा मन्मनो भुंजीत वाङ्मुने!!६१॥

कालिदासः।—नैषा चातुरी अन्तर्भावप्रकाशिका। किं न जानासि कविजनो




हि अन्येषाम् अनुभूतिं प्रकटयति कल्पनाम् अवलम्ब्य इति । यो हि मानसान्तरं विविश्य तद्भावनाम् आत्मीयां करोति स्वानुभूतिवश्च तां वाङ्मयीं कर्तुं क्षमः स एव रसिकानां चित्तेषु जनयति जनुरूप-भावम् । हृदयान्तरप्रतिबिम्बजनकत्वं हि प्रेम तत्प्रकाशनं च कवित्वमेव ।

पक्षाभ्यां कल्पनायाः प्रविशति खलु यो भिन्नहृदयं
स्वीकर्तुं चापि शक्त स्तदनुभवचयं सूक्ष्मकल्पिनम् ।
सञ्जातै र्वाङ्मयै र्वै रसकरलसितै स्तैरनुभवैः
काव्यं सृष्टं कविश्च प्रणयमुखरित श्चौरकृतकः ॥६२॥

( सहास्यम् ) कविस्तु भावचौर एव ।

सानुमती ।—( तिक्तहास्यं हसित्वा ) जानेऽहम् ईदृशेन तस्करमुख्येन हृदयं मे हृतम् अनवहिताया इति । रिक्ताहं प्रवंचिता च भाग्यमर्दिता । को नु धर्माधिकारिकः शास्ति तथाविधं परुषपुरुषम् ?

कालिदासः ।—सानुमति क्रूरंवदे ! नापहृतं केनापि ते चित्तम् । परन्तु कदापि चेत् त्वया किंचिद् अपहृतं तन्नूनं प्रत्यर्पितं सश्रद्धम् । कुमार-सम्भवे महाकाव्ये हरनर्मसखीरूपेण [illegible] मया त्वमेव ।




सानुमती।—शान्तं पापम्। तुच्छा मानवी न कदाप्यहं जगद्म्बया तुलनीया। परन्तु प्रणययाचमाना स्थूलदेहधारिणी न यास्याम्यहं काव्यादर्शत्वाद् लेशमात्रेणापि परितोषम्। प्रेम्णः प्रतिदानं प्रेम एव न तु निगूढोपहास इति मन्ये मन्दधीरहम्।

कालिदासः।—सुचरिते, न जातु उच्छिष्टम् उपयुज्यते उपहारत्वाय। यदर्पितम् अन्यस्मै तन्न मदधीनम्। पुष्पचापादपि निक्षिप्तः शरो नायाति पुन र्ज्यासंयोगाय। विपादस्यातो विद्यते न कारणं न च दोषारोपस्य। सर्वथा क्षमार्होऽयम् अनाचरितगर्हितो जनः।

सानुमती।—कथं तत् त्वया प्रश्रयो दत्त श्चिरेण? कथं च दर्शितानि विविधानि स्नेहचिह्नानि? कथं न वारितं मदागमनम् उपसि सायं च? किमर्थं भाषिताहं गद्गदेन वचसा पुष्पवीथिकासु तथा निभृतदरीषु शैलशिखरेषु निर्जनवर्त्मसु च? कस्य कृते च स्पृष्टा मच्चूर्णकुन्तला दत्तानि च कबरे कांचनकोरकाणि कम्पितकरेण? कीदृशमिदम् आचरितं काव्यकोविदरत्नस्य? अंकुरावस्थायां विनष्टे मति प्रणयप्रसूने न सम्भवति कर्कशकरस्पर्शो न च यथ्वनदाहतापः। को मापयति मामकं परितापं केन च निर्व्याप्यते क्लेशातुपानलस्तुपार-शीतलेन हस्तेन? आदौ उत्साहिते पश्चादवहेलिते ममानुरागे नृशंसत्वमेव प्रकटितं त्वया। का हानिः कृता मया त्वदीया यदहम् इत्थं विप्रलब्धा विप्रकृता च? अपि त्वं श्लोकमन्यं रचयित्वा मां सान्त्वयितुम् उपक्रमसे काव्यविटपिनश्च नवनरफलं प्रदर्शयसि?—




हि अन्येषाम् अनुभूतिं प्रकटयति कल्पनाम् अवलम्ब्य इति ? यो हि मानसान्तरं विविश्य तद्भावनाम् आत्मीयां करोति स्वानुभूतिमिव सा वाङ्मयीं कर्तुं क्षमः स एव रसिकानां चित्तेषु जनयति अनुरूपभावम्। हृदयान्तरप्रतिबिम्बजनकत्वं हि प्रेम तत्प्रकाशनं च कवित्वमेव।

पक्षाभ्यां कल्पनायाः प्रविशति खलु यो भिन्नहृदयं
स्वीकर्तुं चापि शक्त स्तदनुभवचयं मूकलपितम्।
सञ्जातैर्वाङ्मयैर्यैं रसकरलसितैः स्वैरनुभवैः
काव्यं सृष्टं कविश्च प्रणयमुखरितः स्वीकृतकः ॥६२॥

( सहास्यम् ) कविस्तु भावचौर एव।

सानुमती।—( तिक्तहास्यं हसित्वा ) जानेऽहम् ईदृशेन तस्करमुख्येन हृदयं मे हृतम् अनवहिताया इति। रिक्ताहं प्रवंचिता च भाग्यमर्दिता। को नु धर्माधिकारिकः शास्ति तथाविधं परुषपुरुषम् ?

कालिदासः।—सानुमति क्रूरवदे ! नापहृतं केनापि ते चित्तम्। परन्तु कदापि चेन् त्वया किंचिद् उपहृतं तन्नूनं प्रत्यर्पितं सम्भ्रमम्। कुमारसम्भवे महाकाव्ये हरनर्मसखीरूपेण हि चित्रिता मया त्वमेव।—

"लसद्द्विरेफं परिभूय पद्मं
समेघलेखं शशिनश्च बिम्बम्।
तदाननश्रीरलकैः प्रसिद्धै-
श्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥" क १६॥




सानुमती।—शान्तं पापम्। तुच्छा मानवी न कदाप्यहं जगदम्बया तुलनीया। परन्तु प्रणययाचमाना स्थूलदेहधारिणी न यास्याम्यहं काव्यादर्शत्वाद् लेशमात्रेणापि परितोषम्। प्रेम्णः प्रतिदानं प्रेम एव न तु निगूढोपहास इति मन्ये मन्दधीरहम्।

कालिदासः।—सुचरिते, न जातु उच्छिष्टम् उपयुज्यते उपहारत्वाय। यदर्पितम् अन्यस्मै तन्न मदधीनम्। पुष्पचापादपि निक्षिप्तः शरो नायाति पुन र्ज्यासंयोगाय। विषादस्यातो विद्यते न कारणं न च दोषारोपस्य। सर्वथा क्षमार्होऽयम् अनाचरितगर्हितो जनः।

सानुमती।—कथं तत् त्वया प्रश्रयो दत्त श्चिरेण? कथं च दर्शितानि विविधानि स्नेहचिह्नानि? कथं न वारितं मदागमनम् उषसि सायं च? किमर्थं भाषिताहं गद्गदेन वचसा पुष्पवीथिकासु तथा निभृतदरीषु शैलशिखरेषु निर्जनवर्त्मसु च? कस्य कृते च स्पृष्टा मच्चूर्णकुन्तला दत्तानि च कबरे काञ्चनकोरकाणि कम्पितकरेण? कीदृशमिदम् आचरितं काव्यकोविदरत्नस्य? अंकुरावस्थायां विनष्टे मति प्रणयप्रसूने न सम्भवति कर्कशकरस्पर्शो न च वञ्चनदाहतापः। को मापयति मामकं परितापं केन च निर्वाप्यते क्लेशस्तुपानलस्तुषार-शीतलेन हस्तेन? आदौ उन्माहिते पश्चादवहेलिते ममानुरागे नृशंसत्वमेव प्रकटितं त्वया। का हानिः कृता मया त्वदीया यदहम् इत्थं विप्रलब्धा विप्रकृता च? अपि त्वं श्लोकमन्यं रचयित्वा मां सान्त्वयितुम् उपक्रमसे काव्यविटपिनश्च नवनरफलं प्रदर्शयसि?—




रक्ष मां रक्ष पवित्रचारिणीं
पुण्यपोपाय छलात्मशालक
( साध्वसापन्नां हि ) त्रायस्व मामुचितकारिणीम् ॥६५॥

( गायन्त्येव निष्क्रान्ता )

कालिदासः ।—अनार्यं नूनं कृतं मया यदेतां वनबालाम् ईदृशम् अपीडयम् । भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् ! तथापि—

चंक्रम्यन्ते जलदसरसि हंसा रम्यं
चक्रं चांशु र्नभसि लसति सौदामिन्याः ।
इन्दोः शृङ्गं विकसति खलु कान्त्या जिह्मं
प्रेम्णः कान्तिः किमिव हि कुटिला कामिन्याः ॥६६॥

हृदयव्यापारेषु नारीणां शिक्षारिक्तपटुत्वं प्रदर्शितमधुना सरलचित्तया शैलाङ्गनया अपि । परन्तु किमत्र चित्रम् ? मानसराज्ये मनोभवस्य प्रभुत्वम् एकातपत्रमेव ।—

त्वमसि निखिलपा मदन मनसिज
जयसि युवमनो नयनजधनुषा ।
विशिखकृतकिणो हसति मिषरुषा
किमपि निपुणता हृदयरणमृजः ॥६७॥

( ध्यात्वा )—हा मंजुभाषिणि, न जाने कीदृशीम् अवस्थां गता त्वम् आषाढमासे अधुनेति । प्रियतमे !




आगते माधवे कूजनं श्रोतुकामाऽबला प्रायशः
कम्पतेऽप्याशया श्यामलाभो विहंगो यदा दृश्यते।
कीदृशं लभ्यते श्रोत्रयो र्वा हृदो वा तया मुग्धया
मोदनं यद्यहो रौति तारस्वरं कर्कशः काकलः ॥६३॥

कालिदासः।—अविचारः खलु कुतो मां प्रति।—

स्थानकालपात्रभेदं नो जानाति मन्मथो
वत्सनां कथं नु नेष्यासि प्रेमार्तमानसम्।
को हि प्रस्तरेण शक्नोति स्रोतांसि बाधितुं
रंहसा प्रयाति रेवासौ वातोर्मिकत यदा ॥६४॥

अपि विरमवचनेन प्रीतिरभविष्यद् आदितस्तव ? आत्मन स्तारुण्यं लावण्यं च उपालम्भस्य न तु बन्धुजनाद् वितादिनं कालिदासम्।

सानुमती।—कथं त्वां तर्केण पराजेतु शक्यते विद्याहीनेयम् अबला ? धिङ् मम निष्फलयौवनं धिक् च मे निष्ठुरनियतिम् ! (गायति)—

हन्ति हा हन्त अनन्यचारिणीं
तीक्ष्णबाणेन वनान्तचारिणीं
यूथहीनां सारंगीमेव निष्करुणजालकः।
प्राणनाशाय भयेन रोदनं
यं स्मृत्वा तु कृतं धनुर्धनं
कुत्र यातो मन्दाक्षिः स दीनजनपालकः।




रक्ष मां रक्ष पवित्रचारिणीं
पुण्यपोषाय इलारमशासक
( साध्वसापन्नां हि ) त्रायस्व मामुचितकारिणीम् ॥६५॥

( गायन्त्येव निष्क्रान्ता )

कालिदासः ।—अनार्यं नूनं कृतं मया यदेतां वनबालाम् ईदृशाम् अपीडयम् । भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् । तथापि—

चंक्रम्यन्ते जलदसरसि हंसा रम्यं
वक्रं चांशु नभसि लसति सौदामिन्याः ।
इन्दोः शृङ्गं विकसति खलु कान्त्या जिह्मं
प्रेम्णः कान्तिः किमिव हि कुटिला कामिन्याः ॥६६॥

हृदयव्यापारेषु नारीणां शिक्षारिक्तपटुत्वं प्रदर्शितमधुना सरलचित्तया शैलाङ्गनया अपि । परन्तु किमत्र चित्रम् ? मानसराज्ये मनोभवस्य प्रभुत्वम् एकातपत्रमेव ।—

त्वमसि निखिलपा मदन मनसिज
जयसि युवमनो नयनजधनुषा ।
विशिखकुसुमकिणो हसति मिपरुषा
किमपि निपुणता हृदयरणभृजः ॥६७॥

( ध्यात्वा )—हा मंजुभाषिणि, न जाने कीदृशीम् अवस्थां गता त्वम् आषाढमासे अधुनेति । प्रियतमे !




"शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥" क २०॥*

( निष्क्रान्तः )

—इति चतुर्थोऽङ्कः—

रामगिरिवासो नाम






( ससभासद् विक्रमादित्यः )

बन्दिनः ।—( गायन्ति )—

जयतु जयतु विक्रमनृपतिः
धराधिपतिः !
समरनिपुणोऽरिशासनः
धृतशरासनः
विराजते रविसमो विक्रमे ।
जयतु हि शरणागतजनकः
यथा जनकः
कविजनसखो यशोधनः
शशकलाञ्छनः
जयाय य स्त्रिभुवनं चक्रमे ।
जयतु मुनिनन्दितो गुणिवन्दितो
मनुजरंजनो दनुजगंजनः सुरतिः ।
चिरायुषा रम्यतां कृपात्मना गृह्यतां
कृतांजलि रेषा प्रणतिः ॥६८॥

( निष्क्रान्ताः )




विक्रमः।—(सनिःश्वासम्) अतीतं कालिदासस्य निर्वासनगमनदिनाद् वर्षमेकम्। यदा सोऽत्र विराजते स्म सदा खलु राजसभा कविर्गुंजितेन भ्रमरैः मधुचक्रवत् मुखरिता आसीत्। अधुना तु मूकीभूतप्रायाः कवयो विषण्णाश्च तिष्ठन्ति सर्वे पण्डिताः। अहो! एकस्य हि कविरत्नस्य अभावात् सान्द्रतमसावृता जाता सभामण्डली चन्द्रहीनं यथा सतारकमपि आकाशम्। गतानि तान्यस्माकम् आनन्दपूरितानि दिनानि जीवनं च वञ्चितं काव्यसुधारसास्वादनात्।

न चकास्ति विडम्बित-काव्यरुचि-
र्न च भाति मनागपि रत्नसभा।
कविना हि गतेन तु पुण्यगिरिं
क्व नु हन्त हृतं मम चित्तरतम्॥६६॥

विदूषकः।—सखे, भवता एकस्य हि रत्नस्य प्रस्थानं गदितं परन्तु वररुचिश्च कालिदासेन सह उज्जयिनीं तत्याज।

विक्रमः।—सत्यमुक्तं त्वया। अपि तु, मन्दारक, राहुग्रस्ते तपने ग्रहणकाले केन खलु चन्द्रस्यापि अभाव स्तथा तारकाणां च उपस्थिति र्लक्ष्यते? तथाप्यहं निरामेव प्रीतोऽस्मि कालिदासेन सार्धं वररुचे र्गमनेन। सम्पदि विपदि च यः सहायो भवति स खलु सखा समप्राणः। तयोः सौहार्द्यमतीव चित्तमाह्रि।




राजद्वारं निवसति यदा कालिदासः कवीन्द्र-
स्तस्य द्युत्या विलसति सभा विक्रमार्कस्य जोषम् ।
धन्युस्तस्य प्रियवररुचि र्द्वं पहीनो रसज्ञः
सख्यं रम्यं समहृदययो दुर्लभं मर्त्यधाम्नि ॥७०॥

विदूषकः ।—तथापि द्वौ निर्वासितौ नियतिक्रूरतया ।

विक्रमः ।—काठिन्यम् आश्रितं मया तत्काले । अत्र च मे प्रियदुहिता मंजुभाषिणी यौवनेऽपि सर्वाभरणानि अपास्य वैराग्यशोभि काषायं धृतवती । मलिनं वदनमलिनं तस्याः भृशं व्यथयति मे कृतघ्नहृदयम् । तथापि न मन्ये मदाचरणं विचारमूढमासीद् इति ।

यथा कीटकैस्तु प्रभिन्नेऽरविन्दं
न देवार्चनायां गृहीतं तदर्हैः ।
अपत्ये प्रयाते तथा दौर्मनस्यं
परित्यज्यते तत् सदार्येण पित्रा ॥७१॥

क्षपणकः ।— कदापि न भवता नयाधीशेन कृतोऽन्यायः । आत्मनः कर्मणः फलं सर्वैरुपभोक्तुं युज्यते ।

धन्वन्तरिः ।—अथ किम् । अपि तु कालिदासविरहेण भवतो हृदये जाता आधिरेव । नैषा आयुर्वृद्धिकारिका । अतो विस्मरणम् आश्रयतां, महाराज !

विक्रमः ।—तदात्मानमपि विस्मरेयम् ।

विदूषकः ।—मोदकादीनां मिष्टान्नानां महाभोजो यदि आयोज्यते तन्महाराजस्य मनो विषयान्तरे मग्नो भवेत् । रसनामोदश्च रसत्वेन चित्तं नितरां प्रीत्या सन्तापनाशाय प्रभवति ।




विक्रमः ।—यो वै वैद्यः स वै आरोग्यकल्पः ! अपि तु विषयेऽस्मिन् वैद्यराजेन धन्वन्तरिणा किं निदानं विधीयते ?

धन्वन्तरिः ।—न खलु मोदकाशनम् । महामनसे न तथा रोचन्ते मोदकानि यथा मन्दारकाय नामोदरिकाय । विसदृशसंयोगः संघट्टमेव जनयति स्वास्थ्यहानिं चावाञ्छनीयम् । परन्तु मृगया दिग्विजयो वा नूनं करिष्यति हृदयविनोदम् आधिनाशं च । अपि च—

राजन्यानां प्रमोदाय चार्तिनाशाय शर्मदः ।
विग्रहो नितरां श्रेयान् मृगयादेरिति स्मृतेः ॥५२॥

विक्रमः ।—नाहमधुना उत्सहे मृगयाव्यसनाय । तद् दिग्विजययात्रैव सूच्यते सर्वथा ।

क्षपणकः ।—उभयं तु प्राणिनाशकारकम् । अतः कृपार्णवेन विक्रमार्केण परिहार्यं मन्ये । अपि च मानववधात् पशुहननं वरम् ।

अमरसिंहः ।—कथमेतद् उच्यते ? प्रबलपराक्रमो विक्रमादित्यो नाद्यापि सन्न्यासम् अवलम्बितवान् । चिरं चेत् तरवारिः कोषबद्धस्तिष्ठेत्, ततस्य धारा मालिन्यमेति । अरातिवेष्टितश्च अवन्तिदेशोऽयम् । विशालापुरी राजधानी तथा रिपुचरैः समाकीर्णा मक्षिकाभि र्यथाम्रफलं सुपक्वम् । धर्माहवे शत्रुनिधनं परमपुण्याय कल्पते न तु कल्मषकर्मणे । अतोऽहं ब्रवीमि राजेन्द्रेण दिग्विजयाभियानम् एव क्रियतामिति ।

वराहमिहिरः ।—साधु साधु अमरसिंह शौर्यकेशरिन् ! दैवमनुकूलम् इदानीं विक्रमं प्रति, पौरुषं च तम् आजन्मन आश्रितम् । दैवपौरुषेययो-




मणिकांचनयोगे सति को वाधते नु उज्जयिनीदैवतम्? दिग्विजय-परिक्रमा नूनं शुभं विजयं च दास्यति। नास्त्यत्र सन्देहलेशोऽपि।

विक्रमः।—सेनापते वीरसेन, तत् क्रियतां सत्वरं पर्याप्तम् आयोजनं रणयात्रायाः।

सेनापतिः।—यदाज्ञापयति देवः। शरत्कालः समायातो यो युद्धाभियानाय प्रशस्तः। पूर्णव्यवस्थां करोम्यंजसा चतुरंगसेनाभिः। दिग्विजये समाहिते यास्यति श्रीमन्महाराजो राजचक्रवर्तित्वम्। मन्त्रये शीघ्रं रणविशारदैः साकम्। सर्वत्र विजयतां विक्रमधर्मा विक्रमार्कः!

(निष्क्रान्तः)

शंकुः।—रत्नाकरो विक्रमो न तु केवलं कविजनानाम् आश्रयः शूरसेनान्यामेव च नेता। कः शक्ष्यति तं वारयितुं महावीरे विग्रहे अनीकिनीवेष्टितमपि?

अवन्तिकानाथो रत्नकण्ठो दुर्जयविक्रमार्को
रणांगनं यावत् सम्प्रयातो दीप्तमयूखमालः।
विलीयते तावन्नूनमाजौ द्राङ्क् मृगतृष्णिकावत्
प्रलम्बिता छाया व्यूहरूपा शत्रुदलैः करालैः ॥७३॥

घटकर्परः।—दिग्विजयान्ते राजसूयक्रतुं किं करिष्यति राजाधिराजः?

वेतालभट्टः।—अश्वमेध एव न तु राजसूयः क्रियेत विजयानन्तरम्। यज्ञाश्वो यास्यति सर्वासु दिक्षु। यस्तु वाजिनम् अवरोत्स्यति स एव समूलघातं हनिष्यते प्रचण्डाहवे। अश्वे च राजधानीं प्रत्यायाते यज्ञोऽनुष्ठातव्यः।

(ततः प्रविशति वररुचिः)

वररुचिः।—अभिवादये राजचक्रवर्तिनम्। जयतु कविजनवल्लभः!




विक्रमः।—भोः वररुचे ! अपि ते कुशलम् ? दैवप्रेरितोऽसि एव त्वमधुना। कुत्र खलु तिष्ठति सखा ते महाकविः कालिदासः ?

वररुचिः।—अपि महाराजः स्मरति कविश्रेष्ठं निर्वासनदण्डितम् ? दण्डकाले दिष्ट्यातिक्रान्ते पुनरागत स्तत्रभवान् विशालानगरीं सौजन्यविशालाम्। तिष्ठति रहसि स दीनकुटिरे काव्यरचनरक्तिः।—

निर्वासनान्ते प्रत्येति दीर्णहृदयो राजते चोज्जयिन्याम्
अज्ञातवास स्तस्यात्र पर्णकुटिरे पेशलातिथ्यशीले।
विस्मयतेऽहो वित्तेश्वरस्य महती क्रूरता चित्तदीना
दृष्ट्वा महत्त्वं रिक्ताश्रितं चिरधृतौ मालवानां नगर्याम् ॥७४॥

विक्रमः।—कथमेतत्, वररुचे ! मालवाधिपो न कदापि कार्पण्यदोषोपहतः। वद झटिति वद कुत्र विराजते कविप्रवरः। इच्छामि तं संयातुमद्यैव।

वररुचिः।—न प्रकाशितव्या मया तदावासवार्ता विना तस्यैवानुमतिम्।

विक्रमः।—नेदं युज्यते त्वयि, वररुचे, नित्यप्रियकारिन्! अयमहम् उज्जयिनीपति रादिशामि त्वा तदवस्थानोदन्तदानाय। न पाल्यते ममाज्ञा मामकेन रत्नेनापि ?

वररुचिः।—प्रजावत्सल, भवतैव विहितमेतद् यत् सर्वेऽपि स्वसद्मनि स्वच्छन्दं स्थातुं शक्नुवन्ति। कुत्रावसरो नियमलंघनस्य येन केनापि का कथा पुनः स्वयं नियन्तुरेव ?

नियमलंघनं कर्तुं नियन्ता चेद् व्यवस्यति।
धर्मस्य येननं येन मन्यते स्थलांछनम् ॥७५॥




विक्रमः ।—व्यतिक्रमाश्च सन्ति निखिलनियमानां प्रमाणीक्रियन्ते च ते तैरेव । परन्तु न जातु काङ्क्ष्यते मया तद्वार्ता तन्पीडनाय अपिच संवर्धनाय हि । अतः खलु ममानुरोधः पालनीय एव ।

वररुचिः ।—अत्र विषये कालिदासस्यैव अभिमतं लक्षणीयम् । शिरसि धारयामि तवादेशं सदैव । न कुप्यतां मह्यं महाराजेन नीतिज्ञेन इति मे सनिर्बन्धोऽनुरोधः ।

विक्रमः ।—न जानासि किं यन्मम चरा भ्रमन्ति सर्वत्र रात्रिन्दिवं संवादाहरणाय ?

निगूढतमानपि सन्देशचयान् विमूढ
कर्णेजपा मे सर्वत्र गन्तुकामाः ।
प्रयानसमाः खलु सौगन्ध्यमिवाहरन्ति
कुत्राधिशेते शुनः स राजहंसः ॥७६॥

परन्तु तवापचेष्टनं नियमम् असाम्प्रतम् ।

वररुचिः ।—किं करिष्यसि महाकवेर्वार्तया ? स खलु काव्यरचनमग्नो बाह्यज्ञानरहितश्च । अपि च न रोचते तस्मै राजानुग्रहः ।

सूर्यभासा दिनं यद् गतं क्रन्दसीरञ्जनं
वर्षणार्द्रं तथा पुष्कलं सेन्द्रचापाङ्कितम् ।
दुःखसान्द्रं तमो हन्यते येन चित्तांशुना
चन्द्रकान्त्यै न वाञ्छा तयोः स्यात्तदा वा न वा ॥७७॥

अस्माकम् एष वचनोच्छ्वासः । नाभिप्रेतो भवन्तं प्रति स्तोकेनापि अनादरः ।




विक्रमः।—निष्करुणं गर्हितं च वाक्यमिदम्। अप्येतत् तव स्ववाच्यम् उत त्वन्मुखेन कालिदासभणितम्?

वररुचिः।—हन्ता वाङ् न भवेत् कदापि कालिदासस्य न च तेनायमन्यते भवान्। मन्मुखाच्च महता दुःखेनैव सृतम् एतादृशं वचनम्। नेष्यते कदापि मया रत्नाश्रयस्य विगर्हणम्।

विक्रमः।—मम रोषाग्निश्च परमविषादात् मन्दीभूतो नोचेत्…

वररुचिः।—अनुतप्तोऽहं भूयिष्ठं, महाराज दाक्षिण्यभूयिष्ठ! क्षम्यतां बन्धुस्नेहाद् भवत्प्रश्रयाच्च विनिर्गतं रूढं वचः।

विक्रमः।—एतच्च विचिन्त्यता यत् कालिदासोऽपि मेऽपराध्यति स्म।—

स्वाधिकारप्रमत्तो यः शिक्षादानच्छलेन हि।
मनोऽहरत् स्वशिष्यायाः कुत्र तेन समः शठः ॥७८॥

वररुचिः।—राजन्, मार्जनां भिक्षे वाचालतायाः। परन्तु कालिदासो न मन्यते आत्मानम् अपराधिनम्। नासीत् स स्वाधिकारप्रमत्तः। राजदारिका काव्यरचनाविषये पारदर्शिताम् अनयदेव। प्रणयव्यापारेषु च हृदययुगलं राजाभिरुचिं नापेक्षते। तद्वाञ्छनीयं स्यात् धनगर्वितस्य न तु कदापि गर्हितम्।

विक्रमः।—भवतु, व्यथितोऽहं भृशम्। क्व तिष्ठति स आत्मगौरवस्फीतः?

वररुचिः।—विनयावनतो गुरुजनान् प्रति परमश्रद्धाशील एव कालिदासः। सन्तप्तः सन् विराजते कस्याश्चिन् मालिन्याः गेहे। उद्यान-स्थिते मालञ्चे आराधयति च वाग्देवीं नित्यनवकाव्याञ्जलिना। रचितं तेन खण्डकाव्यम् अपूर्वं मेघदूताख्यम्। लिखन्नास्ते कुमारसम्भवं महा-




काव्यम् । परन्तु मालिनीसदृश्या विरूपां समालोचनां श्रुत्वा न समाप्तिं नेष्यति तत्काव्यम् ।

विक्रमः ।—कथमेतत् ? अपि माल्यरचयित्री काव्यकलाया योग्या विचारिका ?

वररुचिः ।—को ज्ञातुं शक्नोति तस्याः काव्यविचारशक्तिं भूयसीम् । जगत्पित्रोः रहस्लीलावर्णनं न कदापि कर्तव्यम् इति उक्तवती सा । कालिदासश्च लज्जया काव्यसमापनाय न चेष्टते । अहमपि तस्या विचारस्य औचित्यं प्रशंसयामि । महाकाव्यं कुमारसम्भवं स्थास्यति चिरासम्पूर्णमेव । तथापि पश्यामि नात्र विषादकारणम् ।—

कलापूर्णश्चन्द्रो भवति त्रिलोककान्त-
स्तमिस्राच्छन्नाया रजनेः स्याप्य दैन्यम् ।
तथाप्युल्लासो हि क्रियते जनेन नित्यं
तृतीयाबालेन्दु र्मधुरो यदा तु दृष्टः ॥७१॥

विक्रमः ।—किमन्यत् काव्यं रचयन्नास्ते स इदानीम् ?

वररुचिः ।—विक्रमोर्वशीयं नाटकमपि रचितं यस्मिन् उर्वशीपुरूरवसोः प्रेम वर्णितम् ।

विक्रमः ।—कथमेतादृशं नामकरणम् ? अस्ति किं तस्मिन् विक्रमनामा कश्चन नायक उपनायको वा ?

वररुचिः ।—( सस्मितम् ) न कश्चिदस्ति विक्रमो नाम्ना । विक्रमेणैवार्जिता दयिता उर्वशी इति व्यंजना अभिलष्यते । महाराजस्य विक्रमार्कस्य नाम प्रति इङ्गितम् अस्ति चेति मन्यन्ते अलंकारशास्त्रज्ञाः ।




राहुग्रासविमोचनस्य परतश्चन्द्रो हि भास्वत्तरो
लीनांकस्तनुते करं सुललितं नीलाम्बरानन्दकम् ।
शापान्ते कविकालिदास उदितो ज्योति स्तनोत्यालये
काव्यानां च तथा सुरोचनतया कुर्वन्मनोह्लादनम् ॥८०॥

मंजुभाषिणी ।—(स्वगतम्) हा मे मन्दभाग्यम् !

कोकिलो नव्यरसं लिप्सु नित्यं प्रमत्तचित्तो
मंजरीश्चुम्बति पर्याप्तं कम्रा मधुद्रु मस्य ।
मोदते प्रेमपरागे नो दीनः स्वनैकवित्तो
हा पिकं निष्ठुरकर्माणं हा हन्त मे कविम् ॥८१॥

भवतु । (प्रकाशम्)—का च वार्ता वाहिता एतन्नभामण्डले परभृतवान्धवेन ? यायावरवृत्तेः स्थिरनिकेताध्यसनं सर्वेषां प्रीतये एव कल्पते ।

वररुचिः ।—कामं मधुप इव रसग्राही सखा मे न तु भ्रमरस्य यायावरवृत्तिरवलम्बिना तेन शीलममुना । तत्कामनाया अरुन्धती एकैव वर्तते ।

मंजुभाषिणी ।—(लज्जां नाटयति) अपि त्वदात्मजनेन प्रार्थिभ्यो दर्शनं दीयते ?

वररुचिः ।—सर्वान् अर्थिनः प्रति स सदैवानुकूलः, का कथा आत्मीयजनस्य । तस्यैव वरदात्री मधुरवचना अस्मिन्नेव नगरे विद्यते । विफलमनोरथोऽपि न कदाच स हीनम्मन्यतां गच्छति । उक्तं तेन हि मेघदूते काव्ये—याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामेति ।




विक्रमः ।—( सनिश्वासम् ) अहो न विस्मृतोऽयं क्रूरकर्मा प्रेमाकरेण महाकविना । तत् कथं न सम्भाषे तम् ?

वररुचिः ।—कवेरनुमतिं लब्ध्वा पुनरेष्यामि महाराजसमीपम् ।

( ततः प्रविशति मंजुभाषिणी )

मंजुभाषिणी ।—( विक्रमं प्रति ) नमामि महाभागम् ।—( जनान्तिकम् ) आर्य वररुचे, कुतो भवानागतः अकस्मात् ?

वररुचिः ।—( स्वगतम् )—

"भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितै रागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥"क२१॥*

मंजुभाषिणी ।—कथं भवान् तूष्णीमास्ते ? किमहमपि जातानादरणीया त्वद्वन्धुजनस्य निर्वासनस्य हेतोः । को दोष आसीन्मम ?

वररुचिः ।—क्षम्यताम् अधमोऽयम् । भवतो म्लानकान्तिदर्शनाद् अहमपि आत्मविस्मृतोऽभवं विमूढश्च । आवयो र्निर्वासनदशा हि विगताधुना । रामगिरिस्थान् सीतापदरेणुपूताद् आश्रमाद् द्वावपि समायातौ उज्जयिनीम् ।

मंजुभाषिणी ।—सत्वरं कथय कुत्र तिष्ठति सखा ते कालिदासः । —

वररुचिः ।—अलमुत्कण्ठया । नगरोपान्ते पुष्पिताग्रानाम्न्या मालिन्या भवने वर्तते शापमुक्तो महाकविः ।




राहुग्रासविमोचनस्य परतश्चन्द्रो हि भास्वत्तरो
लीनांकस्तनुते करं सुललितं नीलाम्बरानन्दकम् ।
शापान्ते कविकालिदास उदितो ज्योतिःस्तनोत्यालये
काव्यानां च तथा सुरोचनतया कुर्वन्मनोह्लादनम् ॥८०॥

मंजुभाषिणी ।—( स्वगतम् ) हा मे मन्दभाग्यम् !

कोकिलो नव्यरसं लिप्सु नित्यं प्रमत्तचित्तो
मंजरीश्चुम्बति पर्याप्तं कस्या मधुद्रु मस्य ।
मोदते प्रेमपरागे नो दीनः स्वनैकवित्तो
हा पिकं निष्ठुरकर्माणं हा हन्त मे कविम् ॥८१॥

भवतु । ( प्रकाशम् )—का च वार्ता वाहिता एतत्सभामण्डले परभृतवान्धवेन ? यायावरवृत्तेः स्थिरनिकेताध्यसनं सर्वेषां प्रीतये एव कल्पते ।

वररुचिः ।—कामं मधुप इव रसग्राही सखा मे न तु भ्रमरस्य यायावरवृत्तिस्वलम्बिना तेन शीलममुना । तत्कामनाया अरुन्धती एकैव वर्तते ।

मंजुभाषिणी ।—( लज्जां नाटयति ) अपि स्वदारमजनेन प्रार्थिभ्यो दर्शनं दीयते ?

वररुचिः ।—सर्वान् अर्थिनः प्रति स सदैवानुकूलः, का कथा आत्मीयजनस्य । तस्यैव वरदात्री मधुरवचना अस्मिन्नेव नगरे विद्यते । विरलमनोरथोऽपि न कदाच स हीनम्मन्यतां गच्छति । उक्तं तेन हि मेघदूते काव्ये—याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामेति ।




मंजुभाषिणी ।—( सस्मितम् ) मेघदूतः खपुष्पस्य समगोत्रः स्यात् । तथापि किमिव हि मधुरम् ईदृशं कविकल्पनम् ! मेघवाहितः सन्देशोऽपि कासाचिन् मोदनाय भवत्येव ।

शोकार्ता रहसि यदा हि साश्रुनेत्रा
रोदन्ती स्मरति विवासितप्रियास्यम् ।
नूनं सा विवरिषतीह मुग्धचित्ता
वार्तां कपिमनिलं तदाम्बुदं च ॥८७॥

विक्रमः ।—वन्दे मंजुभाषिणि, गच्छामि स्वयं यावत् कालिदासस्य अभ्यर्थनाय । दिग्विजयाभियाने च पार्श्वगो भवेन्मम स महाकविः । रणावसरे काव्यविनोदेन जनयिष्यति परानन्दम् ।

मंजुभाषिणी ।–( विषण्णम् ) अद्यापि नावसिन स्तस्य पथिचारः ?

विक्रमः ।—( सविषादं सस्मितं च ) भवतु, वररुचि दास्यति मे संगं न हु कालिदासः । तेनाहृतः समाचारो दिष्ट्या भवेदुपचारो नवकाव्यस्य कालिदासकृतिनः ।

मंजुभाषिणी ।—उक्तमेकदा महाकविना महाभारतस्य शकुन्तलाकाहिनीम् अवलम्ब्य किंचन नाटकं दाशरथे श्चरितम् आश्रित्य च महाकाव्यं रचयिष्यामीति ।

वररुचिः ।—तस्य नित्यनवरचनोन्मेषा प्रतिभा देदीप्यते नियतं स्थानकाल-योगेन साहाय्येन । कालिदासभारती भास्यति यावचन्द्रदिवाकरम् ।

मंजुभाषिणी ।—पततु सचन्दनपुष्पं तव स्मिताननं साफल्यं यातु च भविष्य-वाणी रसिकरञ्जनाय एव । दूरात् पश्यामि तस्य मनीषादुरतिम् अर्चयामि च लोकोत्तरप्रयासं कल्याणदायकम् ।




विक्रमः ।—वत्से, अद्य प्रभृति नास्ति बाधा ते कालिदासदर्शनार्थं गमनस्य ।

मंजुभाषिणी ।—(स्वगतम्) दर्शनमात्रम् अवशिष्टं मदर्थम् इति मन्ये । समाप्तः खलु मया सह काव्यालोचनस्य पर्याप्तावकाशः । तिरोहितं च व्यलीकं व्यवक्रोशनं हर्षजनकम् । खण्डिताहं कथं सभाजये परासक्तं दयितम् ?

विक्रमः ।—कन्यके, किमर्थं वाचं न मिश्रयसि मद्वचसि ? भूयिष्ठं विषयान्तरे निहितं मनस्ते भवेत् । अथवा कुप्यति मे अधुनापि साभिमाना दुहिता ?

मधुरं लपति लोलं च गायति
विहरति काव्यमालञ्चे मंजुभाषिणी या ।
मलिनं हसति मौनेन सम्प्रति
किमिव हि छद्मकोपाया मंजुलं न तस्याः ॥८३॥

मंजुभाषिणी ।—(सहास्यम्) अलं व्याजस्तुत्या पितः ! एतादृशं माधुर्यं ममास्ति चेत् कथं सर्वे यान्त्यवा मत्तो विप्रकृष्टाः ? मा ब्रूयात् सत्यमप्रियम् इति महाजनवाक्ये न विश्वसिमि अतो मे दौर्भाग्यम् । प्रियजनं च नाप्रियीकर्तुं शक्नोमि यस्मात् कारणात् मे परितापः संजातो मर्मदाहकः ।

विक्रमः ।—प्राणाधिके, मा गमः कातरत्वम् । गतस्ते चिराय विषादकालः । हितं मनोहारि च करिष्यामि ते किंचन । स्वयंवृतायाः शुभपरिणयो भवेद्विलम्बितम् ।

भारत्या वरपुत्रो यः कालिदासो महाकविः ।
तस्यैव योग्यभार्या स्यात् सर्वथा मंजुभाषिणी ॥८४॥

मंजुभाषिणी ।—(सलज्जम्) गच्छामीतः तात !




मनसा चिन्तितं यत्ते वचसा च प्रकाशितम् ।
तद्वा न या करोष्यार्य निदेशस्ते विधिर्मम ॥८५॥

( निष्क्रान्ता )

विक्रमः ।—( सस्मितम् ) प्रगल्भा मे दुहिता जाताकस्माद् व्रीडाशीला कमनीया ।

अमरसिंहः ।—किमत्र चित्रं, महाभाग !—

साहसिका स्वभावतः प्रायः कार्यतेऽप्रगल्भा
प्रगल्भा तु परिणयकाले लज्जायाः पुत्तली ।
स्वल्पवचा हि वाक्पटुर्जाता जल्पिका च मूका
विचित्रा गतिरहह नार्याः प्रेमाकायाः सदा ॥८६॥

विदूषकः ।—विवादाद्य उत्सवाः परमरमणीयाः । नृत्तगीतकलरवमुखराणि भवन्ति निलयानि दीयतां भुज्यतां चेति वचांसि भोजसभासु प्रीणयन्ति कर्णौ जठरं हृदयं च । बान्धवोऽप्यहम् अत्र न केवलं कुलम् अपिच मिष्टान्नभूरिर्वं वरयिष्ये ।

धन्वन्तरिः ।—विदूषकवर, नोदरव्यसनं शरीरकुशलाय कल्पते ।

विदूषकः ।—किं न जानीम इदं वैद्यराजप्रसादात् सर्वेऽपि वयम् ? परन्तु पद्मवने मत्तमातंग इव खलु आर्यो धन्वन्तरिः । आनन्दकल्पनाचिरपि म्लानीकर्तुं नितरां चेष्टते नरीनृत्यते च परिणामविभीषिकायाः सान्द्र-तमसि । नैतत् साम्प्रतं प्रथमरत्नस्य ।

धन्वन्तरिः ।—गणनायां प्रथमोऽपि नाहं कदापि रत्नप्रथमः । तथापि वचनीयं मया यदा उपायश्चिन्त्यते तदा अपायोऽपि स्मर्तव्य इति । को




धारयितुं शक्यते तथा मन्दारकं मोदकभोजनाद् यथा पतंगान् वह्निग्रासपतनात् ? मया तु केवलम् आत्मनो विधानम् उच्चार्यते।

क्षपणकः।—अपि विस्मृतमिदं त्वया, मन्दारक, यद् अवसिते शुभोन्मये दिग्विजययात्रां करिष्यति महाराजः ? नर्मसचिवेन त्वया तस्यैव अनुगमनं छायेव क्रियेत।

विदूषकः।—बाढम्। नापेक्षते मन्दारको विषयेऽस्मिन् यस्य कस्यचिदपि निर्देशम्।

मार्तण्डो विद्यते यावद्धियति
मिष्टान्नं वर्तते चास्मिन् जगति।
राजेन्द्रे त्वाहवं घोरं विशति
मन्दारः तेन वै सार्धं चलति ॥८७॥

(सर्वे हसन्ति)

विक्रमः।—साधु साधु मन्दारक मिथ्याधम्य ! परन्तु यत्र यत्काले या मोदकं न स्थास्यति तत्र तदा च त्वमपि त मन्नहायो भवेः ?

विदूषकः।—न खलु कर्तव्य एतादृशोऽनुमानो मद्रचितान् श्लोकान्। शब्दवृत्तिस्तु न केवलं पदपदार्थसूचना परन्तु लक्षणा व्यंजना चैव शक्तिरूपे हि गण्येते।

घटकर्परः।—अहो मिष्टान्नप्रियोऽपि विदूषको वैयाकरणप्रवर इति प्रमाणितमद्य। जयतु वाङ्मधुमंजुलो मन्दारको भाट्ट !

अमरसिंहः।—हास्यरसवेत्ता आलंकारिकश्च मन्दारक स्तर्कचुंचुः।




विदूषकः ।— मूर्खोऽपि पण्डितम्मन्यः पूजां लभेत सर्वतः ।
विद्याविभूषितश्चाहो मूर्खायते विदूषकः ॥८८॥

शंकुः ।—रत्नमण्डलसूर्यस्य प्रियसखो विदूषको रसज्ञो भवेदिति किमत्र चित्रम्।

विक्रमः ।—( सस्मितम् ) बन्धुगुणस्वीकृतिं भृशं तोषयति माम्।

प्रीत्यै सर्वे सदसि कविजनाः
संगच्छन्ते ललितरसरतान्।
कुत्रासूया किमपि न कलहं
भृंगैस्तुल्यो गुणिनिचय इह मे ॥८९॥

मन्दारकस्य वाक्यकुशलताया गुणकीर्तनेनैव समाप्यताम् अद्यतनसभाकार्यम्, विद्वन्मण्डलि !

सर्वे ।—( युगपत् ) विजयतां महाराजो गुणनिधि र्महासूरिः !

( निष्क्रान्ताः सर्वे )

इति पंचमोऽङ्कः

—प्रत्यावर्तनं नाम—






( पथिपार्श्वे वृक्षवेदिकायाम् उपविष्टा नागरिकाः )

कार्तिकः ।—ओः गणेश, मधुरोऽयं प्रदोषकालः स्मारयति माम् उत्सवान्तरम् । महानासीद् उत्सवो राजकन्याया मंजुभाषिण्या उद्वाहकाले । राजन्या आगताः सर्वदेशेभ्यो नगरीमुज्जयिनीं राजसूयक्षेत्रमिव । सायमभवत् नगरी इन्द्रजालसृष्टा कल्पपुरीव दुयतिमालाशोभिता ।

गणेशः ।—अप्येतन्मया न विदितम् ? अन्धोऽपि सन्नहं भूरिभोजनेन परमां तुष्टिमगच्छम् । परन्तु आबधिर त्वं न विशदेन संगीतं श्रुतवान, कार्तिक !

कार्तिकः ।—गीतिरसो मया न सेवितः परन्तु नृत्यदर्शनेन नयनयो स्तृप्तेः पारमगच्छम् । दिव्यांगनासमाः रमण्यो नानाविधैः नृत्यैः स्लोक-सामान्येन चांगलावण्येन सर्वान् व्यामोहयन् एव ।




गणेशः ।—गन्धर्वान् किन्नरान् च ये पराजेतुं शक्नुवन्ति तादृशा गायका गायिकाभिः समं गीतपरिवेशनेन मर्त्यपुरीं वैजयन्तम् अकुर्वन् एव । अहो द्वे वर्षे गते तथापि स्मरामि गीतांशं श्रुतिसुखं मनोहरं च ।

न तत् प्रांगणं यन्न तोरणमण्डितं ।
न तत् तोरणं यन्न किन्नरसंश्रितम् ।
न कोऽपि किन्नरो यो गायति न सुस्वनैः
न गीतकं समुत्थं तेन यदि मिश्रवर्णैः
नराणां मनो योषितां च न रंजितम् ॥९०॥

फाल्गुनी ।—किमिदं संगीतं कालिदासेन रचितम् ? श्रूयते हि तस्य रसनाग्रे सरस्वती तिष्ठतीति ।

गणेशः ।—न महाकविना परन्तु केनचिद् अज्ञातनाम्ना कविना । विक्रमस्य प्रसादात् काकोऽपि कोकिलायते का कथा कस्यचिद् द्विजान्तरस्य ।

वासवः ।—अप्यधुना कालिदासेन अभिज्ञानशाकुन्तलनामकं नूतनं नाटकं रचितम् ?

गणेशः ।—अथ किम् । काचिद् जनश्रुतिश्चागता मत्कर्णम् । आकर्णयन्तु सर्वे—

"कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलम् ।
तत्रापि च चतुर्थोऽङ्को यत्र याति शकुन्तला ॥"

फाल्गुनी ।—कामम् अभिज्ञानशकुन्तलम् अनवद्यं नाटकं तस्य तु नैतत् सर्वस्वम् । निर्वासनकाले रचितं मेघदूतम् अपूर्वं मधुकोषं मन्ये । महाकविरिव तस्य नायको विरहितो यक्षो यो दूतकल्पं नीरदं प्रियासकाशं प्रेषयामास । विषादाप्लुतं संगीतमेव मधुरतमं भवेन्नित्यम् ।




वासवः।—अवज्ञातं त्वया कुमारसम्भवं महाकाव्यम्। तत्तु विचित्रालेख्यपूर्णं प्रेमगुंजनमुखरितं च।

फाल्गुनी।—केचिद् वदन्ति कालिदासेन देवमाहात्म्यं लघूकृतं काव्ये ऽस्मिन्।

वासवः।—नैवम् उच्यताम्। दैवते मानवरूपे वर्णयित्वा कालिदासो देवानां तथा मनुष्याणां च गौरववर्धनमेव करोतिस्म। न स सुरो योऽज्ञातचरितो वर्तते न च स मानुषो यः पश्वादीन् नातिक्रामति। देवानां तथा पशूनां मध्ये स्थापितो नरो जन्तुभावं विहाय लभेतामृतत्वम् इत्येव विधातु राकांक्षा मन्यते मया।

गणेशः।—शृणु लोकप्रवादम् अतीव चित्ताकर्षकम्—

वाल्मीकिरूपमावर्चो
व्यासस्य चार्थगौरवम्।
भासे तु पदलालित्यं
कालिदासे त्रयो गुणाः ॥६१॥

फाल्गुनी।—श्लोकेऽस्मिन् महाकवि रश्वघोषस्तु सम्यगवहेलितः। सौगतस्य पदमाधुर्यम् अतिशयेन मनोहरम् उपमा च सद्भिन्नभावन् चमत्कारिणी। श्रूयतां श्लोकान्तरम् अत्र विषये।—

वाल्मीकेरादिकवेर्यथा कल्पनाप्रांशुतोपो
माधुर्यं चार्जवमाश्रिते स्वल्पभाषे हि भासे।
मालंकारां खलु भारतीं नौति बौद्धाश्वघोषः
सर्वं काव्याकृतिमण्डनं पुंजितं कालिदासे ॥६२॥




वासवः।—न कदापि कालिदासेन पूर्वसूरयोऽवमन्यन्ते। प्रथमनाटके मालविकाग्निमित्रेऽपि धावकसौमिल्लकविपुत्रादीनां प्रथितयशसां स भूयसीं प्रशंसाम् अकरोत्। परन्तु सर्वे वयं विजानीमः व्यासवाल्मीकिसमो महाकविरेव कालिदासः।

कार्तिकः।—कीदृशो मन्यते वक्ष्यमाणः श्लोकोऽयम्?

तोयजेषु पद्मं नगरी-विशाला
पावनेषु गंगा नृपतीश-रामः।
कामिनीषु कुन्ती पुरुषेषु भीष्मो
नाटकेषु भासः कवि-कालिदासः॥६३॥

वासवः।—नातिचिरः प्रयासोऽयं परन्तु अस्मिन् त्वदीयः स्थूलहस्तावलेपो मनाग् दृश्यते। किं त्वं माल्यरचनावसरे काव्यकण्डूयनमपि करोषि?

कार्तिकः।—(सस्मितम्) रसमक्षिकया दष्टस्य काव्यज्वरो जायते। कुत्र च पुष्पाणि येषु कतिपयानि कीटोपितानि भृंगदष्टानि वा न भवेयुः?

काव्यमक्षिका यदा करोति दंशनं सखे
जायतेऽक्षसा ज्वर स्तदा हि चित्ततापनः।
नास्ति शीतलं पयस्तथैव नास्ति चन्दनं
येन शम्यते ज्वरो निदानमत्र छान्दसम्॥६४॥

फाल्गुनी।—(सस्मितम्) नास्ति नः सन्देहलेशो वा। किं न ज्ञातं युष्माभिर्यदेकदा महाकविः कालिदासः कस्यांचिन् मालिन्याः कुंजकुटीरमध्यास्त काव्यचर्चां चाकरोत् तया सह?

गणेशः।—कुत्र माल्यरचनस्य काव्यरचनस्य च विरोधः? श्रीगश्रुतिरपि




माल्यकारः कार्तिको नवरसान् उन्मोक्तुं काव्यसर्जनं च कर्तुं पारयति ।

कार्तिकः ।—सा मालिनीसज्जना मयैव परिणीता ।

वासवः ।—साधु साधु कार्तिक ! कालिदासोऽपि यत्र पराजित स्तत्र जयमाल्यं लब्धं त्वयैव ! या रमणीमनोरमणा गृहपणा सा चातुरी चातुरी । अतस्ते चातुर्यमतीव युक्तमेव । जयतु चतुरचूडामणि मयूरवाहनः कार्तिकेयः षण्मुखः । देवसेनापतिश्च वाग्मितमो देवतानां नास्ति द्वितीयः षडाननो येषु । वाक्यबाणैरेव जीयन्ते तेन दैत्यदानवगन्धर्वा यक्षराक्षसपिशाचाः ।

> षण्मुखो वाक्यवीरः स्याद् देवानां संसदि ध्रुवः ।
> ओष्ठमौर्वीविनिक्षिप्तै द्विपो हन्ति शिलीमुखैः ॥६५॥

कार्तिकः ।—(सक्रोधम्) पश्यामि वाचाटतायाः कारणं त्वयि । स्कन्दः परमो वीरः सुरसंसदि यतो ध्रियते तन्नाम महाराजपौत्रेण शूरतरुणेन ।

वासवः ।—न ग्राह्यं मतं मे देवराजस्यापि ? (सर्वे हसन्ति)

कार्तिकः ।—न शक्नोमि सोढुं कदापि वाचालतामीदृशीम् । कथं कालिदासस्य पराजयः सूच्यते ? नासीत् पुष्पशीलो वागीश्वरसुतः कदाचन पुष्पिताग्रायाः प्रियार्थी । रामगिरेः प्रत्यावृत्तो महाकवि स्तस्याः सदने अभ्यर्थितो गृहदेवतेव चासीत् संपूजितः । तत्प्रदर्शिते काव्यामोदरुचे ज्ञानं च तथावाप्तम् । त्वन्मुखनिःसृता निन्दा प्रत्यावर्तते त्वां प्रत्येव । मया च सा न श्रावणीया । कालिदासेनैव गदितम्—




"न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ।"

अतो विरमय ते रसनाताण्डवं पिशुनाधरनर्तनम् ।

वासवः ।—मया तु प्रशंसनमेव अभिलषितम् । तथा हि—

कुसुमान् प्रयान्ति कुसुमान्तरं यथा
रसमार्गणाय मधुपा त्वरान्विताः ।
कवयस्तथैव विचरन्ति तृष्णया
रुचिरं चिरेण रसिकाय वर्तते ॥६६॥

फाल्गुनी ।—अलं वाग्जालविस्तारेण । अतिपेषणेन इक्षुरपि याति तिक्तताम् ।

वासवः ।—न तु चन्दनकाष्ठम् अतिघर्षणेनापि जहाति सौरभम् ।

फाल्गुनी ।—कथं निन्दकरसना चन्दनदारुतुल्या भवेत् ? विरम विरम सहस्र-निन्द्यलोचन वासव दुर्भाष !

वासवः ।—दुर्वाससो मुनेः कुपितस्येव तवाभिशापाद् बिभेमि अतोऽहं मौनं समाचरामि ।—अपि श्रुता केनापि विक्रमार्कस्य दिग्विजयवार्ता ?

गणेशः ।—अथ किम् । नित्यमायान्ति सन्देशा रणाङ्गनात् । महता शौर्येण युध्यते परमपराक्रमो विक्रमार्कः ।—

"अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु क्लेशलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥"(क २२)॥*



# षष्ठोऽङ्कः

प्रथमं प्राचीमगच्छत् सः। दुर्निवारक्रमगात् सिन्धुरयादिव वेतसी-वृत्तिमाश्रित्य सुह्मै राज्ञा संरक्षितः। तदनन्तरं विक्रमेण वंगदेशोऽपि समाक्रान्तः। कालिदासेन रच्यमाने रघुवंशमहाकाव्ये वर्णितं शृणुत—

"वंगानुत्खाय तरसा नेता नौसाधनोद्यतान्।
निचखान जयस्तम्भान् गंगास्रोतोऽन्तरेषु सः॥" रघु ४।३॥

फाल्गुनी।—मया तु श्रुतं वंगा यथा वाक्पटवस्तथा युद्धनिपुणाश्च।

गणेशः।—तेषां नौवाहिनी भूयसी शक्तिशालिनी आसीत्। महता आयासेनैव विक्रमेण वंगसेना पराजिता वशतां च नीता।

वासवः।—

आश्चर्यं हि विरुद्धं लक्ष्यते नित्यं वंगाधिवासिनां चरित्रे
जिह्वानर्तनरत्या साहचर्यगतं तीव्राहवेषु कौशलान्तम्।
मन्ये तस्य हेतुः शौर्यभा न तथा चातुर्यदा यथात्मवृत्तिः
कः शक्नोति निरोद्धुं वाहिनीमथवा दुर्दान्तवीर्यमालवानाम्॥६७॥

गणेशः।—नेदम् उचितं वचः। शौर्यशीलानां शत्रूणामपि गरिमा माननीयः खलु। एतेन जेतॄणां च गौरवं वर्धत एव।

संमानयति शूरेन्द्रो जितशत्रून् सदैव हि।
विजित्य दुर्बलारातीन् वीराख्यां कस्तु गच्छति॥६८॥

वासवः।—भवतु। ततस्ततः गणेश व्यासलिपिकार!

गणेशः।—(सस्मितम्) नाहं लिपिकारः परन्तु चारणवर्णकः। न चलति तथा करो यथा धावति रसना।—आकर्णय रणवृत्तान्तम्। पश्चाद्




विक्रमः सैन्यबद्धकरिसेतुभिः कपिशान्नदीम् उत्तीर्य उत्कलाधिपतिना दर्शितेनैव पथा कलिङ्गाभिमुखम् अगच्छत्। कलिङ्गराजं पराजित्य पुनरपि तस्मै स्वाधिकारं ददाति स्म।

वासवः।—युक्तमेतद् धर्मविजयस्य नृपस्य अवन्तिकाधिपतेः।

गणेशः।—अथ स वेलातटेनैव पूगतरुशोभितेन दक्षिणाशां प्रतस्थे। कावेरीनदीं तीर्त्वा चन्दनसुरभितां मलयाद्रेरुपत्यकां प्रापूणोत्। पाण्ड्यराजान् घोराहवेषु च पराजितवान्।

> मध्याह्नमार्तण्डो नान्यो विक्रमार्कस्तु चण्डः
> शक्नोति सोढुं को वर्चः स्तीक्ष्णमाभीक्ष्ण्यधारम्।
> दिव्याङ्गनेव श्री र्नित्यं विग्रहे तस्य पार्श्वे
> स्थित्वा यशोमाल्यं दत्ते ह्याल्पदीप्तं हि तस्मै ॥६६॥

कार्तिकः।—तथ्यमुक्तं त्वया परमरम्यं च। ततस्ततः?

गणेशः।—ताम्रपर्णी-सगम-जातानि मौक्तिकानि जितराजन्यैः तस्मै समर्पितानि। अतःपरं वीरेन्द्रः केरलदेशमुपनीतः।—

> "भयोत्सृष्टविभूषाणां तेन केरलयोषिताम्।
> अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः॥" र. ४/५४॥

फाल्गुनी।—न कदाप्यबलाः पीडयितुं शक्ता मालवसैन्या विक्रमचालिताः।

गणेशः।—अथ किम्। परन्तु खर्जूरतीरशोभितां मुरलाम् अतिक्रम्य विक्रमसेना केरलान् पराजयत। तदनन्तरं तुरगबहुलैर्यवनसैन्यैः सह तुमुलाहवे प्रवृत्तो मालवराजः।—




"सह्यापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥" ४-६३॥*

कार्त्तिकः ।—ततस्ततः ? नावगतं मया महाकवेर्नवीनग्रन्थस्य आख्यानं विस्तरशः ।

गणेशः ।—अस्माकं सेना काश्मीरप्रान्तवाहिनीं सिन्धुनदीम् उपस्थिता । हूणाः काम्बोजाश्च महाविग्रहेषु विजिताः । आधुनिकं समरसंवादं गृहीत्वा सद्य आगतो वररुचिः । निखिलविवरणं कालिदासश्च परमयत्नेन वर्णयन्नास्ते रघुवंशे महाकाव्ये । परन्तु सर्वमेव रघुदिग्विजयरूपेण चित्रितम् । मनीषा गृह्णाति काव्योपकरणानि सर्वतो ददाति च तेभ्यो नवरूपाणि मणिवत् स्वप्रभाविम्बितानि ।

वासवः ।—

नादर्शे यथा कदापि तथा काव्यकल्पे
बिम्बत्वं गताः स्वरूपगुणाः कस्यचिद्धि ।
वर्णानि यदा कवेर्मनसः संयुता स्यात्
सम्पूर्णो भवेत् तदा प्रकृतेः काव्यकायः ॥१००॥

फाल्गुनी ।—संभावये गणेशवासवयोः काव्यविश्लेषणम् । अपि समाप्ते विक्रमाभियाने पूर्णतां यास्यति रघुवंशम् ?

गणेशः ।—न हि न हि । रघुवंशस्य नायको दाशरथिः श्रीरामो न तु रघु र्महौजा अपि । महाकाव्यस्य विस्तारो महानेव सौरवंशस्य कृत्स्नविवरणं हि तस्मिन् स्थास्यति । न जाने कदा शक्ष्यति कालिदास स्तत् समापयितुम् । परन्तु कुमारसम्भववत् तन्नासम्पूर्णं वर्तिष्यते ।




कार्तिकः ।—पुनरागतो विक्रमार्को दिग्विजयेन किमुत रघुवंशेन श्रेयसीं प्रीतिं प्राप्स्यतीति तर्कयामि ।—

यथा विद्युन्मालं जलदपटलं दृष्टिसरसं
न वज्राणां शब्दो भवति हि तथा हर्षजनकः ।
सुकाव्यास्वादश्च त्रिदिवपुलकं संजनयति
क्व संख्ये स्यात् शौर्यं रिपुभयकरं तस्य सदृशम् ॥१०१॥

वासवः ।—सार्थकं खलु सूत्रधारणं कार्तिकस्य मन्थनकृतिनः । सरसवाक्यमाला तत्कृता सोच्छ्वासप्रशंसाम् अर्हति । विजयतां विक्रमेण तथा कालिदासेन सह कृतकर्मा कार्तिकः ।

( ततः प्रविशति वररुचिः )

वररुचिः ।—भोः विद्यालंकृता नागरिकप्रवराः ! किमालोच्यते भवद्भि रुत्तेजितैः सानन्दैश्च ?

गणेशः ।—महाराजविक्रमस्य जयसंवादं तथा कालिदासरच्यमानं रघुवंशं च युगपद् वयं सभाजयन्त आस्महे ।

वररुचिः ।—स्थाने कृतं युगपदालोचनम् । विग्रहे विक्रमं काव्ये च कालिदासम् उद्दिश्य वक्तुं शक्यते—अनेन सदृशो लोके न भूतो न भविष्यतीति ।—युद्धस्य नवतमा वार्ता मयानीता । रघुवंशं रच्यते इहेति परमं रमयति माम् । न मुहूर्तमपि विलम्बते कविसत्तमः ।

वासवः ।—अनिशं काव्यरचनरतो हि महाकविः । ज्वलद्देवदारुकाष्ठात् स्फुलिंगानीव प्रतिभादीप्तिस्फुरितात् तन्मानसाद् वहिरागच्छन्ति काव्यान्यधुना प्रतिमुहूर्तं रात्रिन्दिवम् । अव्यक्तव्यथोल्लासद्वन्द्वमग्न इव




उद्वेलितहृदय स्तिष्ठति अक्षितारके संवध्य मत्तवद् अलक्ष्यवस्तुषु दूरसंस्थितेषु। यदि न तरसा—सर्वं लिखेन् तन् हृतसर्वस्वो भवेदित्थं समाचरन्निव यापयति कालमनन्दितम् अमन्दं च। तस्य प्रतिभया लब्ध इदानीं चरमोत्कर्षो दैवाशिषा। मानससरसि मराल इव केलिमत्तः काव्यपम्पापयसि। वचनं यदा करोति तदा सहजललिताश्रम्पूक्तवक्त्रा विनिर्गता अजस्रधारया हास्यलेखा च द्योतते स्थिरीभूता सौदामिनीव ओष्ठाधरप्रान्तयोः। अहो अपूर्वं सौभाग्यमस्माकं यत् पश्यामः स्वनेत्राभ्याम् ईदृशं कविरत्नम् अलोकसामान्यम् !—

भूमे ज्योति र्न भवति नियतं स्वर्गजातप्रभावद्
येनोक्तं भोः सुललितवचनं नाट्यकारेण सद्यः।
नूनं पन्नं तदपि तु नितरां चित्रमकूपारिष्टं
दिव्यार्चिः स्वं प्रकटितमभवन् काव्यचक्रे हि तस्य ॥१०२॥

वररुचिः।—धन्यस्त्वं वानव गुणाढ्यकारिन् ! श्रेयसः श्रेयस्तरं काव्यं रचयिष्यति कालिदासः। भविष्यविकाशोन्मुखानि प्रतीक्षन्ते चित्तभूमौ तस्य काव्यबीजानि लोकालोकातीतानि। आलोचितं मया तेन बहुकाव्यकल्पनम्। न समाप्तिं यास्यन्ति कदापि निखिलकल्पाः कविसम्राजस्तस्य।

गणेशः।—एतान्यपि काव्यानि रचयित्वापि न गतः सन्तोषपारम् इति वदति वान्धवजनः। ज्ञातमधुना तस्य कारणं लोकवादस्य याथार्थ्यं च।

वररुचिः।—प्राकृतजनस्य सुलभसन्तोषः स्वहिताय स्वसुखाय च कल्पते।




परन्तु यस्मिन् लोकोत्तरा प्रभातरला प्रतिभा देदीप्यमाना कुतस्तस्य सुखं क्व च चरमसन्तोषः ?—

> रात्रौ क्रन्दन्ति कुञ्जे स्फुटनपरिविभा मंजुकलिका
> दिङ्नारी निर्भरस्य व्यथयति मुमुक्षो झंकृतरुतम् ।
> रंहत्यूर्ध्वं रुदित्वा गुरुगुरु धृताम्बु वैद्युतरुचिर्
> दिव्यान्तर्ज्वालदीप्तः क्षणमपि न सौख्यं गच्छति कविः ॥१०३॥

असन्तुष्टिरेवात्र दैवानुग्रहात् लोकक्षेमाय सर्वतुष्टिविधानाय च सम्पद्यते । दुःखमपि तस्मिन् धत्ते सुरम्याम् इन्द्रधनुर्द्युतिम् उत्सारयति च रसनिर्झरं मुक्तबन्धनम् ।

गणेशः ।—सत्रं वररुचे, मधु क्षरति वचनं तव ज्ञानं च विदधाति तमोहरम् । अकारणं नहि कालिदासः स्नेहसुधा वितरति त्वयि ।

वररुचिः ।—कविसख्यलाभो मज्जीवनस्य गरिष्ठं सौभाग्यमेव शिवाशीरिव । स्वाराध्यदैवतम् महादेव इव कालिदासस्य यथाशुतोष स्तथा नटराजोऽपि । मंचस्थे स्वनाटके नायकरूपेण स आविर्भविष्यतीति मया श्रुतं तन्मुखादेव ।

वासवः ।—नूनं संवर्धनं प्राप्स्यसि सर्वेभ्यः । अपि विदितो महाराजेन नव-काव्यद्वयस्य संवादः ।

वररुचिः ।—शकुन्तलारचनवार्ता प्राप्ता तेन न तु रघुवंशसम्बन्धिनी । जय-परिक्रमायां समाप्तिं गतायां स राजधानीम् अचिरेण प्रत्यागमिष्यति । —मम च ज्ञातव्यम् अन्यदस्ति । युद्धकाले देशे देशे दुर्भिक्षाद्य उत्पाता जायन्ते । कथमासन् मालवाधिवासिनो यदा वयं दूरं गता इतः ?




कार्त्तिकः ।—वैरिराष्ट्रेषु खलु अभवद् विपत्पातो न तु अवन्तिकासु । कः भाग्यश्च राजाज्ञया स्वकृतोऽमात्यैः । आसीदेकदा शस्यक्षेत्रेषु पंगपालन्याक्रमणं परन्तु कृषिशास्त्रविदां प्रयासेन द्रुतं तन्निवारितम् । आनन्दोत्थं नयनसलिलम् अत्र स्वस्थजनस्य न हि कारणान्तरात् ।

( नेपथ्यम् अवलोक्य )

का आयाति साश्रुनयनासौ आकुलितकुन्तला ?

( ततः प्रविशति पुष्पिताग्रा गायन्ती )

पुष्पिताग्रा ।—( गायति )—

निन्दति नन्दनन्दनचारित्रमनिन्द्यं
निन्दति चन्दनानिलशीतात्रं मलिन्दं
निन्दति कुंकुमारुणस्वमुखारविन्दम् ।
कृपणा हि वन्दिनी वृषभानुनन्दिनी
निन्दति छिन्दती हृदिस्थितप्रेमबन्धम् ।
मा गमो माधव खण्डितायां राधिकायामानन्दम् ॥१०४॥

कार्त्तिकः ।—अहो प्रेयसी मे पुष्पिताग्रा करुणस्वरेण गायति खण्डिताद्भुतसंगीतम् ! पुष्पिताग्रे, कथम् आत्मानं विस्मरसि ? न यास्यद्य माल्योपहारं गृहीत्वा राजकन्यासमीपम् ?

पुष्पिताग्रा ।—तत्रैव यामि । अपि त्वं पथिमध्ये बान्धवान् दृष्ट्वा संलापमत्तः स्वनियोगं विस्मृतवान् ?

कार्त्तिकः ।—बाढम् । परन्तु त्वद्दर्शनेन सर्वं स्मृत्वा सत्वरं यास्यामि ।

वररुचिः ।—अयि किन्नरकण्ठि भद्रे ! नन्वहं पूर्वदृष्टस्त्वया कदापि ?




पुष्पिताग्रा ।—( सस्मितम् ) अभिवादये कविरत्नं वररुचिं रुचिस्मितम्। न मादृशी विस्मरति बन्धुजनान्। परन्तु विस्मृतिविषये कविवराणाम् असाधारणत्वं सर्वलोकविदितम्।

वररुचिः ।—कथमेतद् वदति आर्या पुष्पिताग्रा ? एको हि वरकवि स्तिष्ठति विशालानगर्यां कालिदासनामा। न तेन विस्मृतो मालिनीसख्याः पुष्पिताग्रायाः समादरः। तवैव नूनं साहाय्येन पुनः प्राप्ता तेन मंजुभाषिणी धरवर्गिनी।

पुष्पिताग्रा ।—अलमतिभाषणेन सखे वररुचे ! न कोऽपि शक्नोति महाकवेर्मंजुभाषिणीं वियोजयितुम्। निमित्तमात्रं भूताहं पुनर्मिलनसौकर्याय। किं न जानन्ति भवन्तो महोदधिबन्धने रामभद्रस्य सहायीभूता दारुमार्जारीति ? पुनरपि तु—

> काव्यवारिधिमन्थनात् प्राप्तं सुधाकलशं
> भुज्यते प्रियभार्यया सार्धं महाकविना।
> हा हतास्मि कुभाषिणी मन्दस्मितेन यया
> नीलकण्ठवदाहृतं कालान्तकोष्णविषम् ॥१०५॥

कार्तिकः ।—नैतद् युज्यते त्वयि पुष्पिताग्रे।

वररुचिः ।—अचिन्तितपूर्वम् इदम्, अयि वरागने ! सस्त्रीकः कालिदासः प्रियसखस्तव वशंवदश्च।

पुष्पिताग्रा ।—कामं स प्रियसखो न तु सखीप्रियस्तथापि।

फाल्गुनी ।—( जनान्तिकम् )—



# षष्ठोऽङ्कः

"स्त्रिया श्चरित्रं पुरुषस्य भाग्यं
दैवा न जानन्ति कुतो मनुष्याः।"

वररुचिः।—अयि सुचरिते! आत्मनो वचो निराकुरु। जानेऽहम् अमृतं हि पीतं त्वया न तु हलाहलम्।

पुष्पिताग्रा।—(सस्मितम्) परिहासविजल्पितमेतद् युष्मान् सर्वान् व्यामोहयद् इति मे प्रतिभाति।

वासवः।—को जानाति परिहासपरमार्थयो र्भेदमत्र? इत्थंकस्य तत्त्वं निहितं गुहायामिति महाजनोक्तिर्न कदापि निरर्थका।

वररुचिः।—भोः कुशाग्रीयधि नागरिक! सरलवाक्यानि सरलार्थेनैव ग्रहीतव्यानि। नात्र संशयस्य कारणं किंचन।—

तिलं तालीकरोत्येव छिद्रान्वेषी दुराशयः।
परीवादेन गच्छन्ति सन्तोषं कुत्र चापराः॥१०६॥

वासवः।—क्षमस्व माम् आर्ये माल्यशिल्पिके! क्षन्तव्यश्चाहं वररुचिरनेन विद्योत्साहिना कार्तिकेनापि। लोकापवादः प्रायेण भित्तिहीन ईर्ष्याप्रणोदितश्च।

वररुचिः।—(सस्मितम्) एतेन परितुष्टाः सर्वे वयम्। चिरं प्रस्फुटन्तु जनमनोमालञ्चे पुष्पिताग्रासेवितानि सुमनांसि काव्यवल्लीनाम्! गच्छामि तावत् कविनिर्वृत्तं द्रष्टुमानसः।

(निष्क्रान्तः)

पुष्पिताग्रा।—अहं च यास्यामि राजावरोधं शनैः शनैः।

(प्रस्थिता)

कार्तिकः ।—अस्ति मम नियोगः कश्चन । विलम्बितेन कार्यसिद्धिर्न भविष्यति । (निष्क्रान्तः)

यादवः ।—

उज्जयिनी नो रंजनपुरी रत्नाश्रयस्य हि सद्म
यत्र रमण्यो नेत्रनिमिषैः स्वर्योपितोऽपि जयन्ति ।
प्रौढकिशोराः काव्यरुचयो नित्यं रता रसस्तृष्टौ
यौवनदृप्ता युद्धकुशलाः कालं नयन्ति च रंगे ॥१०७॥

फाल्गुनी ।—यास्यामो वयं क्रीडाभूमिं महद्द्रथसन्दर्शनाय ।

अन्ये ।—साधु साधु ! त्वरमेव ।

(निष्क्रान्ताः सर्वे)

—इति षष्ठोऽङ्कः—

जनविचारणं नाम






( मंजुभाषिणी अलिन्दस्थिता )

मंजुभाषिणी ।—( गायति )—

दीप्यते निशायां रंहसा गतायां
स्वप्नोत्थितोपसी रागारुणकुन्तलया ।
दारितं तमिस्रं वारितं स्वजस्रं
कृष्णाजिनांचलं प्रोन्मोचितगुण्ठितया ॥
शीतके प्रयाते माधवप्रभाते
गुंजन्ति चंचला भृंगा मधुवाञ्छनया ।
वाति चाविरामं मारुतः सकामं
कूजन्ति कोकिला श्चूताकुरमन्त्रगया ॥
गीतकं वितीर्णं मूर्छनाप्रकीर्णम्
आकर्णितं तया चित्ताकुलयन्त्रगया ।
हा प्रसूनचापं त्वत्कृतेः कलापं
स्मृत्वैव रुद्यते पृथ्वीतललुण्ठितया ॥१०८॥

( ततः प्रविशति कालिदासः )




कालिदासः।—अहो सुमधुरं सुकण्ठीसंगीतम्! तवास्मि हारिणा गीतरागेण प्रसभं हृतः कवेरङ्गना दुष्यन्त एव।

मंजुभाषिणी।—(सस्मितम्)—नाहम् आरण्यका सारंगी शकुन्तला वा, परन्तु शुद्धान्तवासिनी दुहिता राजचक्रवर्तिनः। कविराजस्य किमु स्वप्नः किमुत मतिभ्रमः संजातो निर्मलप्रदोषे?

कालिदासः।—अयि पितृयशोगर्विते! क्षमस्व मां दरिद्रब्राह्मणम्। परन्तु मधुमयमपि विषादपूर्णं ते संगीतमासीत्। अतोऽहं विमूढोऽभवम्। विमुग्धस्य का सुमतिः क्व च प्रजागरः?

मंजुभाषिणी।—किमर्थम् अकालोदयः अवरोधाम्बरे कविशशांकस्य?

कालिदासः।—कः करोति कालाकालयो र्विचारम्? लावण्यमाकर्षयति रसज्ञं रात्रौ च दिवा च प्रणयरश्मिना।—

यत्र वसन्तश्री स्तत्र कोकिला स्तदनुगा श्चारणा-
स्तोयदनिर्याने नित्यसेविना भवति नीलांजना।
पुष्पितवल्ल्यां रूपकीर्तने मधुकरै र्नन्द्यते
प्रेमरसज्ञाना महंति त्वं वरतनुः पद्मिनी॥१०६॥

अस्ति मे कश्चिद् वाग्विशेषः।

मंजुभाषिणी।—(सस्मितम्) तथाप्यस्ति ते मुखरता निरवधिः?

"अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।"
अस्त्युज्जयिन्या कविसत्तमस्य
प्रिया विरूपा च रसोक्तिहीना॥{




कालिदासः ।—( सहास्यम् ) अमृतं प्रियाभाषितम् अनृतमपि चेत् । न तु वदामि प्रियभाषितम् अनृतमपि वरणीयमिति ।

मंजुभाषिणी ।—( सस्मितम् ) अहो जानामि कथं कालिदासेन प्रहेलि-कारयशो लब्धम् । भवतु, कश्चित् कान्ताविरहगुरुणा शापेन देदीप्यमान-महिमा कालिदासरूपो यक्षो मत्समीपं मेघदूतं प्रेरयामास । कश्चित्-शब्दारम्भं काव्यं च कथितमेव कुशलतया ।

कालिदासः ।—वागर्थशब्दमवलम्ब्य रचितं महाकाव्यं च सम्पूर्णप्रायम् । "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये"—इत्यादि स्मर्तव्यम् ।

मंजुभाषिणी ।—तद् विशेषस्य सविशेषं व्याख्यानं क्रियतामधुना ।

कालिदासः ।—त्रीणि काव्यानि मे सुपरिचितानि साधारणार्थमेव । परन्तु विशेषकाव्यं निर्विशेषं न तु इतरजनानां श्रवणाय । शब्दाल्पत्वमपि तत् प्रियाकर्णे रौमि वदनाम्बुजस्पर्शलोभात् । अपि ते सम्मतिरिह, वरानने ?

मंजुभाषिणी ।—न प्रणयिजनः सम्मतिमपेक्षते अस्मिन् विषये, का कथा प्रेमिकाप्रणयस्य आर्यपुत्रस्य ?

कालिदासः ।—प्रिये मंजुवादिनि, विशेषकाव्यस्य सूचना खल्वस्ति न तु यदापि उपसंहारोऽस्याङ्कनीयः । न जानीते महाकालोऽपि तस्य समाप्तिं यद् असमापनीयं प्रकृत्या ।—

स्फुरति हृदये यन्निगूढवाक्यं निरन्तरं हि
कथमपि मया लभ्यते प्रकाशो हृदैव तस्य ।
त्वमिह सुतनो शक्यसे विवेक्तुं श्रवेण नैव
रहसि यदि ते मानसं हृदन्तस्तनोपि मनः ॥१११॥




मंजुभाषिणी ।—न जाने यदहं जाता ते चित्तचारिणी क्षणमपि वा न वेति ।

कालिदासः ।—( सहसा ) अपि पश्यसि तालवृन्तस्यैतस्य वर्णतूलिकालिखितं सूक्ष्मं चित्रम् ? चित्रकरस्य नैपुण्यं प्रशस्तमेव ।

मंजुभाषिणी ।—( सन्निहिता भूत्वा ) पश्याम्यधुना । महनीयैव कृतिः शिल्पिन अस्य ।

( द्वावेव तालवृन्तान्तरितौ भवतः )

कालिदासः ।—( सस्मितम् ) अनुमतः अनुगत एव !—

मंजुलौष्ठाधरान्नाम पीत्वा प्रभूतां सुधां
मुच्यते मोक्षदा साधनाहीनसिद्धि मैया ।
प्रेमिकास्यामृतं प्राप्यते यद्यहो यत्नमै-
स्तोयधे मन्थनं प्रेमहीनैं हि देवैः कृतम् ॥११२॥

मंजुभाषिणी ।—( विहस्य )—

महत्यभून् मम हि कृते तु मार्गणा
सुशिक्षणं वनवसति स्तथा चिरम् ।
न जन्यते जगति कदापि कोऽथवा
फलत ् ति हृदयतपं विना श्रमम् ॥११३॥

विना साधना न भवति सिद्धिः कुत्रापि—किमेतन् न ज्ञातं त्वया, परिहासप्रिय ! अथवा अद्यापि क्रियते परीक्षा शिष्यायाः ?

कालिदासः ।—( विहस्य ) केन कया वा परीक्ष्यते का को वेति न जानाम्यहम् अयि चिरप्रिये भूतपूर्वे शिष्ये !

मंजुभाषिणी ।—( विहस्य ) कः का वा शक्नोति पराजेतुं वितण्डायामपि




कालिदासं गीष्पतिम् ? भवतु, किं नवीनं काव्यम् अद्य रचयिष्यसि, कान्त ! अपि महाकाव्यान्तरं सृज्यते रघुवंशे समाप्ते सति ?

कालिदासः ।—अलंकारशास्त्रसम्मतमेव महाकाव्यं रघुवंशम् । अस्य विस्तृतिश्च सुप्रसारा । तथाप्येतन् न प्राप्स्यति उपसंहारहीनतां कुमारसम्भववत् । दाशरथिः श्रीरामो यस्य नायकस्तथा रघुरूपनायकश्च कथं न भवेत् तत् परमाभिरामं, प्रिये ! अतःपरं न कामये, प्रेयसि, महाकाव्यं खण्डकाव्यं वा विरचयितुम् । अद्वितीयमेव महाकाव्यं भवतु मे रघुवंशम् ।—

एको भवति ज्येष्ठो जगतः शम्भु र्विभूतिशाली
सोऽन्यसपत्नो भाति रवि र्भित्त्वा तमोनिकाय्यम् ।
एका कलकण्ठी केलिरता मन्मानसे मराली
वाग्दैवततोषार्थं हि तथाद्वैतं ममास्तु काव्यम् ॥११४॥

मंजुभाषिणी ।—नूनं रघुवंशमेव भवतश्च श्रेष्ठकाव्यम् । मह्यं तु भूयिष्ठं रोचते तव काव्यशक्तेरपूर्वा सृष्टि र्मेघदूतम् ।

कालिदासः ।—(सस्मितम्) यदर्चनं यद् दैवताय अनुसृज्यते तत्तस्य किमपि श्रव्यं भवेद् इत्यस्मिन् विषये नास्ति सन्देहः ।—

अपूर्वा शक्तिरत्रैव दृश्यते प्रेमपूजने ।
प्रणयी याति देवत्वं देवता क्रियते प्रिया ॥११५॥

मंजुभाषिणी ।—(सलज्जम्) अमृतमेव वर्षति त्वन्मुखात् । (स्वगतम्) विषयान्तरं कथयामि यावत् ।—(प्रकाशम्) अपि त्वया निर्वासन-




काले नलोदयनामकं यमककाव्यं रचितम् ? ईदृशी कापि जनश्रुति र्मे कर्णमागता ।

कालिदासः ।—प्रियतमे, किं मामकं तत्रागोचरम् ? अपि च, वरवर्णिनि, त्वच्चरणचारणः कालिदासः काव्यविलासमेव कांक्षते न तु काव्यविजृम्भणम् । केवलं यमकमाश्रित्य रचितं न गच्छेत् काव्यपदवीम् । अथवा मया स्फुटता दर्शिता । अहं यत्नकामोऽस्मि ईदृशं काव्यं रसोत्तीर्णं भवेत् क्वचिदिति । केनचिद् अज्ञातनाम्ना अर्वाचीनेन रचितं नलोदयम् । विद्यन्ते खलु तस्मिन् कतिपया मनोहराः श्लोकाः । मद्रचितानि कानिचिदपि रसात्मकानि वाक्यानि तदन्तर्गमितानि । तथापि मूलत स्तद्ग्रन्थो वागर्थव्यभिचारो विभीषिकेव ।—

भावप्रकाशनं सदा रम्यकल्पनाविलासदीप्तं
वाचा चिरं स्फुटार्थया कल्पते मनोहकाव्यक्लृप्त्यै ।
वक्रार्थसंयुतं वचः संजयष्टिलास्यवन् सभायां
मन्ये भवेत्तु केवलं हास्यमर्पकारणं न तृप्त्यै ॥११६॥

मंजुभाषिणी ।—अथ पुष्पबाणविलासमपि त्वया न कृतं स्यात् ।

कालिदासः ।—( सस्मितम् ) पुष्पबाणविलासो वर्णितो मया सर्वेषु काव्येष्वेव न तु तन्नामधेये कवितासमुच्चये । कवियशःप्रार्थिनो बहवो रचका मन्नामग्रहणं कृत्वा काव्यान्युपहरन्ति रसिकसंवर्धनाय । पण्डितम्मन्या अपि ते न तु उपहसनीयाः । विचित्रमहो संचरणं मानववासनायाः ! अन्यनामभिरपि जीवितुम् इच्छन्ति केचन कीर्तिकांक्षिणः । महा-




कालस्य सुवर्णतरण्यां स्थानस्थानानि स्पर्शीकुर्वन्ति ते, परन्तु नाश्यो लभ्यन्ते ते अनन्त्यां तस्यामकस्मात् सावहेलकालिन्यरभसेन ।—

स्वरचितकाव्यानां प्रचारमात्रं सदैव लिप्सवो
भुवनरसवृन्दारा न कामयन्ते स्वनामकीर्तनम् ।
किमपि गतं दिष्ट्या तदीयलक्ष्यं यदाहि कुण्ठितैः
स्मृतिनिलयालिन्दे प्रदीयते स्था नरैः कलान्तरम् ॥११५॥

मंजुभाषिणी ।—वररुचेः काव्यानि नितरां प्रीणयन्ति माम् ।

कालिदासः ।—आ जन्मनो हि मित्रकाणिना वररुचेः । सफलस्तस्य काव्यप्रयासः । मनाक् मामनुकरोति प्रेमहेतो स्तथापि तस्य प्रतिभा वरणीयैव । आवयोश्च परमं स्निह्यति मनः । नास्ति तस्य प्रणयकांचने श्यामिकाया लेशोऽपि । योग्यं रत्नं हि वररुचि विक्रमार्कस्य विचित्ररत्नमन्दिरं ।

मंजुभाषिणी ।—कदा प्रत्यावर्तते पिता मे दिग्विजयाभियानात् ?

कालिदासः ।—विजयपरिक्रमा सम्पन्ना इत्यहं श्रुतवान् । नूनमागच्छति तूर्णं राजधानीं जयस्रङ्मण्डितः । अश्वमेधकाले मित्रीकृता राजन्या विजयिनम् उपहारप्राचुर्येण सभाजयिष्यन्ते उज्ज्वलयिष्यन्ति च युगपद् उज्जयिनीम् ।

( ततः प्रविशति दौवारिकः )

दौवारिकः ।—आर्योत्तमौ नमाम्युभयौ । मालिनी पुष्पिनाम्नी दर्शनार्थमागता ।

मंजुभाषिणी ।—अविलम्बितेन प्रवेशय ताम् ।




दौवारिकः ।—यदाज्ञापयति भर्तृदारिका ।

( निष्क्रान्तः )

कालिदासः ।—अपि पुष्पिताग्रा भवेद् एकाग्रचित्ता प्रियसखीविनोदने ?

मंजुभाषिणी ।—( सस्मितम् ) अथ किम् ।

( ततः प्रविशति पुष्पिताग्रा )

मंजुभाषिणी ।—न केवलमियं पुष्पिताग्रा अपि च पर्याप्तपुष्पस्तबकांगा ।

पुष्पिताग्रा ।—( सहास्यम् ) जयेतां कविदम्पती ! सखीमुखे परिहासोऽपि प्रसूनवत् स्फुटति । तथापि किं कारणम् उपहासस्य ?

मंजुभाषिणी ।—प्रथमं तथ्यमुक्त्वा पश्चात् स्तोकानृतं कथं भणसि ? परिहासः प्रफुल्लपुष्पमिव उपहासस्तु स्मितविकारमात्रम् । न कदापि यास्यति पुष्पिताग्रा उपहास्यताम्

पुष्पिताग्रा ।—त्वन्मुखाम्भोजात् उपहासोऽपि मधुक्षरो भवति मंजुवचने !—

सुललितानि वाक्यानि नित्यमधरसीमनि ।
स्फुटन्ति खलु यस्याः सा कथ्यते मंजुभाषिणी ॥११८॥

मंजुभाषिणी ।—अये द्रुतरचनकुशले मालिनीसखि काव्यमाल्यग्रन्थिके ! सफलो नूनं शिक्षालाभस्ते कविचरणोपान्ते ! नाहं लब्धवती काव्यशैलीं कणामात्रेणापि ।—

काकनीडजाते हि गीयन्ते सुस्वनाः
कोकिलैरशेषेण भुक्त्वाम्रमंजरीम् ।
हंसकह्रदस्थोऽपि मण्डूकः पंकिलो
मकमकायते हन्त निन्दित्वा कौमुदीम् ॥११९॥




45558

पुष्पिताग्रा।—(सहास्यम्) एतेनैव प्रमाणिता सख्या मे काव्यनिर्माण-निपुणता। वाक्येन यदस्वीकृतं कर्मणैव तद्विपरीतं निराकृतम्।

कालिदासः।—

कुसुममदिरं सौरभं तनित्वा
कलवल्लतेव च रश्मिना स्फुरन्ती।
अरसिकमपि मारुतं विनोद्य
विरलल्लाम मता हि पुष्पिताग्रा ॥१२०॥

पुष्पिताग्रा।—(लज्जां नाटयित्वा) नाहं कविकथिता पुष्पिताग्रा।

मंजुभाषिणी।—(सस्मितम्) पुष्पिताग्रावृत्तेन रचितेयं कविता सखीजनाय महाकवे रुपहारः।

कालिदासः।—

गृहाण प्रीतिसंभारं मामकं पुष्पपेलवं!
चरितार्थो भवेन्नूनं भक्तोऽयं हृष्टमानसः ॥१२१॥

पुष्पिताग्रा।—कवीनाम् अतिभाषणदोषः लोकश्रुतिरेव। ऋते महाकवे रन्यः कः क्षमोऽपेशलं चारुकर्तुम्? जयतु कालिदासभारती विबुधमनो-रंजनाय!—पलायनं कृत्वैव स्थानादस्मात् स्वच्छन्दा भविष्यामि।

वन्दते कविवरं कृतांजलि-
र्मालिनी गुणनिधिं सखीपतिम्।
वन्दते ननु च मंजुभाषिणी
माधुरीं किरति या स्मितांशुकैः ॥१२२॥

(निष्क्रान्ता)




दौवारिकः ।—यदाज्ञापयति भर्तृदारिका ।

( निष्क्रान्तः )

कालिदासः ।—अपि पुष्पिताग्रा भवेद् एकाग्रचित्ता प्रियसखीविनोदने ?

मंजुभाषिणी ।—( सस्मितम् ) अथ किम् ।

( ततः प्रविशति पुष्पिताग्रा )

मंजुभाषिणी ।—न केवलमियं पुष्पिताग्रा अपि च पर्याप्तपुष्पस्तवकांगा ।

पुष्पिताग्रा ।—( सहास्यम् ) जयेतां कविदम्पती ! सखीमुखे परिहासोऽपि प्रसूनवत् स्फुटति । तथापि किं कारणम् उपहासस्य ?

मंजुभाषिणी ।—प्रथमं तथ्यमुक्त्वा पश्चात् स्तोकानृतं कथं भणसि ? परिहासः प्रफुल्लपुष्पमिव उपहासस्तु स्मितविकारमात्रम् । न कदापि यास्यति पुष्पिताग्रा उपहास्यताम्

पुष्पिताग्रा ।—त्वन्मुखाम्भोजात् उपहासोऽपि मधुक्षरो भवति मंजुवचने !—

सुललितानि वाक्यानि नित्यमधरसीमनि ।
स्फुटन्ति खलु यस्याः सा कथ्यते मंजुभाषिणी ॥११८॥

मंजुभाषिणी ।—अये दूरतरचनकुशले मालिनीसखि काव्यमाल्यग्रन्थिके ! सफलो नूनं शिक्षालाभस्ते कविचरणोपान्ते ! नाहं लब्धवती काव्यशैली कणामात्रेणापि ।—

काकनीडजातैर्हि गीयन्ते मुस्वनाः
कोकिलैरंगेण भुक्ताग्रीमंजरीम् ।
हंसस्हृद्स्थोऽपि मण्डूकः पंकिलो
मकमकायते हन्त निन्दित्वा कौमुदीम् ॥११९॥






पुष्पिताग्रा ।—( सहास्यम् ) एतेनैव प्रमाणिता सख्या मे काव्यनिर्माण-निपुणता । वाक्येन यदङ्गीकृतं कर्मणैव तद्विपरीतं निराकृतम् ।

कालिदासः ।— कुसुममदिरं सौरभं तनित्वा
कनकलतेव च रश्मिना स्फुरन्ती ।
अरसिकमपि मारुतं विनोद्य
विरलललाम मता हि पुष्पिताग्रा ॥१२०॥

पुष्पिताग्रा ।—( लज्जां नाटयित्वा ) नाहं कविकथिता पुष्पिताग्रा ।

मंजुभाषिणी ।—( सस्मितम् ) पुष्पिताग्रावृत्तेन रचितेयं कविता सखीजनाय महाकवेरुपहारः ।

कालिदासः ।—

गृहाण प्रीतिसंभारं मामकं पुष्पपल्लवं ।
चरितार्थो भवेन्नूनं भक्तोऽयं हृष्टमानसः ॥१२१॥

पुष्पिताग्रा ।—कवीनाम् अतिभाषणदोषः लोकश्रुतिरेव । ऋते महाकवेरन्यः कः क्षमोऽपेशलं चारुकर्तुम् । जयतु कालिदासभारती विबुधमनोरंजनाय ।—पलायनं कृत्वैव स्थानादस्मात् स्वच्छन्दा भविष्यामि ।

वन्दते कविवरं कृतांजलि-
र्मालिनी गुणनिधिं सखीपतिम् ।
वन्दते ननु च मंजुभाषिणी
माधुरीं किरति या स्मितांशुकैः ॥१२२॥

( निष्क्रान्ता )




मंजुभाषिणी ।—( विहस्य ) प्रमदा यथा महाकवेर्मनीषां प्रमोदयन्ति न तथा नरपुंगवाः। कथमीदृशः प्रभेदो दृश्यते ?

कालिदासः ।—रमणी न केवलं मानवजननी अपिच काव्यजनयित्री एव। सर्वं खलु रमणीयकम् उन्मेषयति सृष्टिकामनाम्। रसात्मिका भवेन्नित्यं रसोत्साह-प्रदायिका। रसिक एव प्रेमिकः कविश्च आ सर्जनात्। भक्तजना अपि वदन्ति स्रष्टृव्याख्याने रसो वै स इति।

मंजुभाषिणी ।—अघटनघटनपटीयसी च शक्तिः। कविजनास्तु सृष्टिमूले प्रेक्षन्ते रसमात्रं न कदापि महाशक्तिम्।

कालिदासः ।—प्रियतमे, शक्तिमत्येव रसात्मिका न तु बलहीना। जगतः पितरौ पार्वतीपरमेश्वरौ द्वावेव सम्पदेवते प्रलयकारित्वं यदैव नाशकारणं समुपस्थितम्।—

> या शैलनन्दिनी जगन्माता स्निह्यति मयूरेऽपि पुत्रहेतोः
> सा चैव जायते महाकाली ध्वंसयति रुष्टेव सर्वजीवान्।
> सृष्टे विधायकः शिवो नित्यं यः पशुपतिः पाति कृत्स्नविश्वं
> रुद्रः सताण्डवः स एवास्ते नृत्तपदघातैश्च घूर्णिता क्ष्मा ॥१२३॥

मंजुभाषिणी ।—अपूर्वा हि सृष्टिलीला नटराजस्य शिवरुद्ररूपस्य!

( ततः प्रविशति कस्तुरिका )

कस्तुरिका —क्षम्यतामियं सख्या सखीकान्तेन च। न कामये रहोव्यापृतयो विघ्नं साधयितुं श्येनीव कपोतमिथुनस्य।

मंजुभाषिणी ।—( सस्मितम् ) प्रगल्भा जाता त्वम् अतिशयेन, कस्तुरिके! सर्वेष्वेव कालेषु स्वागता त्वं मत्पीसकाशे।—




क्षेममेव काङ्क्षतेऽत्र या सर्वतः सखीजना
कल्पते हि नन्दनाय ममांहर मन्दागमः।
ईर्ष्यति क्व रोहिणीं नु तारांगना शशिप्रियां
प्रोज्ज्वलापि जन्यते नु तन्मुस्मिनै मिथप्रभा ॥१२४॥

कालिदासः।—युवयोः सख्यं परमसुन्दरं रोचते मे सदैव। सखि कस्तुरिके, त्वामृते मंजुभाषिण्यपि जाता नूनम् अपूर्णकला चन्द्रश्रीरिव।

मंजुभाषिणी।—(विहस्य) हला सखि शुचिस्मिते! मद्विरहितेन कविना त्वन्मुखनार्थेन गम्यते हर्षनन्दनम् इति मे प्रतिभाति।

कस्तुरिका।—(लज्जां नाटयित्वा) नैतद् वाच्यं परिहासच्छलेनापि। क्व नु विदुषी लावण्यमयी विक्रमदुहिता क्व च मादृशी रूपगुणवंचिता सेनानीसन्ततिः? इत्थं वचनं वदसि चेद् इतो यास्यामि सद्यः।

कालिदासः।—अयि बुधजनवन्दिते अनिन्दिते! आत्मानं नावमन्यस्व।—

न तत् मनोज्ञरूपं तनुगतलावण्यमात्रकं यत् नारीणां
क्षणप्रभेव मोहं जनयति जीमूतमण्डनापि प्रावृट्सु।
सखीजनेषु रागश्चिरसुभकामेन दृश्यते चेत् मानिन्या
भवेद्लोककान्तिः प्रियसखि चित्तार्कलांछिताया वै तस्याः ॥१२५॥

कस्तुरिका।—महाकविः स्वप्रीत्या प्रतिभया च रूपगुणहीनामपि अलंकरोति भूयिष्ठम्। यास्यामि कार्यव्यपदेशाद् अन्यत्र। गृह्णातु मे प्रणामम्।

(निष्क्रान्ता)




मंजुभाषिणी ।—कविवरेण यदुक्तं—रूपहीनाया गुण एव रूपायते—न तन् कदापि प्रीणीयाद् रमणीम् । कस्तुरिका च न कुरूपा ।

कालिदासः ।—(सस्मितम्) केनोच्यते कस्तुरिका कुदर्शनेति । परन्तु तन्-सौन्दर्यमुखराय मे श्रीमती मंजुभाषिणी कुप्येदिति विचिन्त्य पल्लव-ग्राहितैव मयावलम्बिता । विचित्रं खलु प्रकृतिचित्तं दुरवगाहं पुरुषस्य !

मंजुभाषिणी ।—अतलः सिन्धुरिव प्रवालमौक्तिकपूर्णं च ।

कालिदासः ।—किं न ज्ञातं मया चिरलिप्सुना रत्नार्थिना ? अतुलमैश्वर्यं ते, मंजुभाषिणि, देहातीतम् आध्यात्मिकविभूतिरूपम् । मुखराण्यपि सर्वकाव्यानि मे न शक्नुवन्ति प्रकाशयितुं विशदेन यदस्ति निभृते हृदयकन्दरे सुगुप्तमेव ।

( ततः प्रविशति दौवारिकः )

दौवारिकः ।—जयताम् ! उज्जयिनीं प्रत्यागतो महाराजाधिराजो युवराजेन तदात्मजेन च सह । उद्भवन्ते विजयपताका राजधान्यां सर्वत्र ।

( प्रस्थितः )

कालिदासः ।—

प्रत्यावृत्तः समरविजयी विक्रमार्को विशाला-
मुह्यन्ते प्रकृतिनिवहैः वैजयन्त्यो विचित्राः ।
शंखारावो ध्वनति मधुरं नृत्तमत्ता मयूराः
स्वर्गान्मन्ये पतति मम्ना पेशला पुष्पवृष्टिः ॥१२६॥




मंजुभाषिणी।—यास्यामि झटिति पितृसमीपम्....

( ततः प्रविशति विक्रमः )

विक्रमः।—आगतोऽस्मि स्वयमेव।

मंजुभाषिणी।—स्वागतं पितः! अपि ते सर्वांगीणं कुशलम्?

कालिदासः।—प्रणतोऽस्मि। अपि कुशलिनौ कुमारस्कन्दौ?

विक्रमः।—बाढम्! सर्वे कुशलिनो वयम्।

मंजुभाषिणी।—क्षीणदेहो जातस्तातो देदीप्यमानस्तु कृशानुवत्।

विक्रमः।—( विहस्य ) जाते, रणप्रयासो न कल्पते मेदवृद्धये। परन्तु भुजौ मे बलवत्तरौ संजातौ। प्रौढिं न बाधते मां विन्दुमात्रमपि।

( उपविशति )

उपविशत युवाम्।

( तौ तथा कुरुतः )

( सस्मितम् ) कीदृशी महाकवेः काव्यविजयवार्ता?

मंजुभाषिणी।—रघुवंशाख्यं महाकाव्यं पूर्णतां यास्यति सत्वरमेव।

विक्रमः।—परमम् आनन्दितोऽस्मि।

कालिदासः।—महाराजस्य दिग्विजय एव रघुविजयरूपेण वर्णितः।

विक्रमः।—अहो भूयिष्ठा तृप्तिर्लब्धा मया। कुमारसम्भवे मत्पुत्रस्य कुमारस्य कृत उल्लेखः। मेघदूते च पौत्रस्य स्कन्दस्य स्थानप्राप्तिः काव्य-




कौशलेन। विक्रमोर्वशीयस्य नाम स्वयम् अधिवसामि। कालिदासस्य कृपया सर्वेऽपि वयम् अमृतत्वं लभेमहि।

कालिदासः।—ईदृशवचनं ममापराधं जनयेत्। देवस्यैव दाक्षिण्येन कृतार्थोऽस्मि मन्दः कवियशःप्रार्थी। प्रांशुलभ्ये फले उद्बाहुर्वामन इव गच्छेयमुपहास्यताम्। परन्तु भवतः सौजन्याद् आतिथेयत्वाच्च वज्रसमुत्कीर्णे मणौ सूत्रस्य गतिरिव सुकरा सम्पन्ना मे काव्ययात्रा।

विक्रमः।—द्रागेव पठिष्यामि रघुवंशं त्वया मंजुभाषिण्या च सह। नास्ति व्याकरणविभीषिका तथालंकारविकृतिः छन्दस्सर्वस्वता वा कस्मिंश्चिदपि काव्ये तव। स्वभावजकवित्वं ते दुरूहाचातुरीं नापेक्षते।

कालिदासः।—सर्वथा कृपापात्रः अधमोऽयं जनः।

> सौराचिं भूपो वितरति मयि स्नेहापुण्यं
> पत्नी मे साध्वी नृपतिदुहिता स्वाहेवाग्नेः।
> रत्नानि प्रीत्या महसि च सदा संभाषन्ते
> चित्रं नान्यत्र स्फुरति मम येन् काव्यादर्शः॥१२७॥

विक्रमः।—सरलीकृता त्वया विविदृत्ता शक्तिः। कवित्वं सहजातमेव न तु कष्टार्जितम्। सर्वशास्त्रज्ञाने च त्वं पण्डितश्रेष्ठान् अपि अतिक्रामसि लीलया। आर्षसंस्कृतो वर्णाढ्यं महदालेख्यं प्रस्तुतमेव तव काव्यनिकुञ्जे।—




जम्बुद्वीपे रविकरयुते स्थीयते यावदुर्व्यां
यावच्छ्लोकैः कथमपि न वा हीयते देवभाषा।
तावन्नूनं निखिलरसको वर्तते कालिदास-
श्चन्द्रापत्यं निवसति यदि स्नेहदो विक्रमार्कः ॥१२८॥

कालिदासः।—पुनरपि मामपराधयते गुप्तवंशचूडामणि मम च गोप्ता। चन्द्रेण रक्षितं कुलं तव, गुप्तश्च चन्द्रो विक्रमार्कस्य प्रखरार्केण। अथवा चन्द्रः स्वयं रक्षितो यस्य ललाटे तन्महादेवस्य प्रतिमो महाराजो विक्रमः कुमारजनकः। भवत्स्नेहधन्योऽहं कृतक-तनयः। मंजुभाषिणि, त्वमपि धन्या जाता पितृस्नेहेन तातमहिम्ना च।

मंजुभाषिणी।—अथ किम्। प्रेम्णा सुताहं पितु र्वात्सल्य-कल्पद्रुमस्य। धन्याप्यहं महाकवे धर्मपत्नी शिष्या च निस्सपत्ना साहित्यसंगीतकलासु।

वीरेन्द्रसुताहं धन्या जननी मे
भ्राता जितशत्रुः क्षेत्रं च विशाला।
पत्नी कविजिष्णोः प्रेम्णा चिरतृप्ता
धन्यं मम जन्म कान्ति र्हि सुधन्या ॥१२९॥

विक्रमः।—पुत्रादपि प्रियतर वत्स कालिदास, किं ते पुनः प्रकाम्यम् उपहरिष्यामि?




( * तारकाचिह्नितानि वृत्तानि ग्रन्थकारकृतानि )

| श्लोकांकः | | | वृत्तम् |
|---|---|---|---|
| उत्सर्गः | .... | .... | विचित्रा * |
| मांगलिकी | .... | ... | स्रग्धरा |
| चित्रासंगे | .... | .... | स्रग्विणी |
| १ | .... | .... | निर्माल्यम् * |
| ३ | .... | .... | कल्लोलिनी * |
| ५ | ... | ... | मंजुस्वना * |
| ९ | .... | ... | वेणुस्वना * |
| १० | .... | .... | शशिकला |
| ११ | ... | .... | वसन्ततिलका |
| १२ | .... | .... | रुचिरा |
| १३ | .... | .... | कलहंसः |
| १४ | .... | .... | सुवदना |
| १५ | .... | .... | शान्तनुतिः * |
| १७ | .... | .... | जलोद्धतगतिः |
| १८ | .... | .... | मृगमदः * |
| १९ | ... | .... | शुभेन्दुभा * |
| २० | .... | .... | मणिद्वीपः * |
| २१ | .... | .... | वंशस्तनितम् |
| २२ | .... | .... | वप्रक्रीडा * |
| २३ | .... | .... | खंजक्रान्ता * |
| २४ | .... | .... | पृथुपदी * |
| २५ | .... | .... | जलतरंगः * |
| २६ | .... | .... | रम्यास्मितम् * |
| २७ | .... | .... | मत्तमयूरी |
| २८ | .... | .... | नीलांजना * |




कालिदासः ।—अतःपरं किं नु प्रेयः स्यात् ?   इदमस्तु तथापि—

( भरतवाक्यम् )

नित्यं व्याप्रियतां प्रजाजनहिते धर्मव्रतो भूपतिः
विद्वांसः परमाः प्रकीर्णयशसो यच्छन्तु नृभ्यः श्रुतम् ।
पीत्वा वाक्यरसं प्रकाममनिशं काव्यप्रियौ जम्पती
भूयास्तुः सुखिताः प्रसन्नमतयस्ते यैश्च पुण्यं स्तुतम् ॥१३०॥

—इति सप्तमोऽङ्कः उपसंहारो नाम—

—( यवनिकापातः )—

=समाप्तमिदं कविकालिदासाख्यं नाटकम्=






( * तारकाचिह्नितानि वृत्तानि ग्रन्थकारकृतानि )

| श्लोकांकः | वृत्तम् |
|---|---|
| उत्सर्गः | विचित्रा * |
| मांगलिकी | स्रग्धरा |
| चित्रासंगे | स्रग्विणी |
| १ | निर्माल्यम् * |
| ३ | कल्लोलिनी * |
| ५ | मंजुस्वना * |
| ६ | वेणुस्वना * |
| १० | शशिकला |
| ११ | वसन्ततिलका |
| १२ | रुचिरा |
| १३ | कलहंसः |
| १४ | सुवदना |
| १५ | शान्तनुतिः * |
| १७ | जलोद्धतगतिः |
| १८ | मृगमदः * |
| १९ | शुभेन्दुभा * |
| २० | मणिदीपः * |
| २१ | वंशस्तनितम् |
| २२ | वप्रक्रीडा * |
| २३ | खंजकान्ता * |
| २४ | पृथुपद्मी * |
| २५ | जलतरंगः * |
| २६ | शम्पास्मितम् * |
| २७ | मत्तमयूरी |
| २८ | नीलांजना * |

| श्लोकांकः | वृत्तम् |
|---|---|
| ६३ | मेघदुन्दुभिः * |
| ६४ | निर्झरिणी * |
| ६५ | विलापिनी * |
| ६६ | मध्यक्षामा |
| ६७ | प्रहरणकलिका |
| ६८ | जयन्तिका * |
| ६९ | तोटकम् |
| ७० | मन्दाक्रान्ता |
| ७१ | भुजंगप्रयातम् |
| ७३ | वैजयन्ती * |
| ७४ | चित्ररेखा * |
| ७६ | मदालसा * |
| ७७ | रंरम्भितम् * |
| ७९ | शुचिस्मिता * |
| ८० | शार्दूलविक्रीडितम् |
| ८१ | चारुखेलः * |
| ८२ | प्रहर्षिणी |
| ८३ | लीलालास्यम् * |
| ८६ | सुरंजना * |
| ८७ | करभगतिः * |
| ८९ | भ्रमरविलसितम् |
| ९० | सुमूर्छना * |
| ९२ | शंखारावः * |
| ९३ | मृगांगना * |
| ९४ | तूणकम् |
| ९६ | मंजुभाषिणी |
| ९७ | रंजनका * |
| ९९ | सन्दीपनम् * |

| श्लोकांकः | | | वृत्तम् |
|---|---|---|---|
| ६३ | .... | .... | मेघदुन्दुभिः * |
| ६४ | .... | .... | निर्झरिणी * |
| ६५ | .... | .... | विलापिनी * |
| ६६ | .... | .... | मध्यक्षामा |
| ६७ | .... | .... | प्रहरणकलिका |
| ६८ | .... | .... | जयन्तिका * |
| ६९ | .... | .... | तोटकम् |
| ७० | .... | .... | मन्दाक्रान्ता |
| ७१ | .... | .... | भुजंगप्रयातम् |
| ७३ | ... | .... | वैजयन्ती * |
| ७४ | .... | .... | चित्ररेखा * |
| ७६ | .... | .... | मदालसा * |
| ७७ | .... | .... | रंरण्यितम् * |
| ७९ | .... | .... | शुचिस्मिता * |
| ८० | .... | .... | शार्दूलविक्रीडितम् |
| ८१ | ... | .... | चारुखेलः * |
| ८२ | .... | .... | प्रहर्षिणी |
| ८३ | .... | .... | लीलालास्यम् * |
| ८६ | .... | ... | सुरंजना * |
| ८७ | .... | .... | कलमगतिः * |
| ८९ | ... | .... | भ्रमरविलसितम् |
| ९० | .... | .... | सुमूर्च्छना * |
| ९२ | .... | .... | शंखारावः * |
| ९३ | .... | .... | मृगांगना * |
| ९४ | .... | .... | तूणकम् |
| ९६ | .... | .... | मंजुभाषिणी |
| ९७ | .... | .... | हंसयका * |
| ९९ | .... | .... | सन्दीपनम् * |

| श्लोकांकः | वृत्तम् |
|---|---|
| १०० | वीथिवृत्तम् * |
| १०१ | शिखरिणी |
| १०२ | चित्रलेखा |
| १०३ | मधुक्षरा * |
| १०४ | हिन्दोला * |
| १०५ | सुनन्दा * |
| १०७ | शार्ङ्गनादः * |
| १०८ | क्रौंचीरुतम् * |
| १०९ | रसोल्लासः * |
| ११० | उपजातिः |
| १११ | नर्मवर्त्म * |
| ११२ | रंरंण्यितम् * |
| ११३ | रुचिरा |
| ११४ | पम्पाप्लुतम् * |
| ११६ | रम्यचारिणी * |
| ११७ | मोहनीयम् * |
| ११९ | व्यंगगगतिः * |
| १२० | पुष्पिताग्रा |
| १२२ | रथोद्धता |
| १२३ | शंकरताण्डवम् * |
| १२४ | सुस्मिताख्या * |
| १२५ | श्लथचरणा * |
| १२६ | मन्दाक्रान्ता |
| १२७ | मिलिताक्षरा * |
| १२८ | मन्दाक्रान्ता |
| १२९ | मणिमाला |
| १३० | शार्दूलविक्रीडितम् |

